श्रीजिनदत्तसूरिप्राचीनपुस्तकोद्धारफन्ड-ग्रन्थाङ्कः ३४

२३आ६

॥ अर्हम् ॥

श्रीदुर्लभराजसदसिप्राप्तखरतरविरुद-वसतिमार्गप्रकाशक-श्रीमज्जिनेश्वरसूरिविरचितम्

# षट्स्थानकप्रकरणम् ।

(श्रावकवक्तव्यतापरनामकम्)

श्रीमज्जिनपतिसूरिशिष्यप्रवरपण्डित-उपाध्यायजिनपालगणिविवृतवृत्त्युपेतम् ।

जैनाचार्यश्रीमज्जिनकृपाचन्द्रसूरीश्वराणाम् उपदेशेन कलकत्तानिवासी बाबु कनैयालालात्मज

रूपचद्र बडेर मातृ छोटिबाई नाम्न्याः द्रव्यसाहाय्येन—

प्रकाशक-श्रीजिनदत्तसूरि ज्ञानभडार-सुरत.

इद पुस्तक जैनाचार्य श्रीमज्जिनकृपाचन्द्रसूरीश्वराणा शिष्येण प्रवर्तक-मुनिसुखसागरेण सशोधितम्

विक्रमाब्दस्य स १९९० प्रतय ५०० ख्राइस्टस्य सन् १९३३

# अनुक्रमणिका



# पुस्तक प्राप्तिस्थान


श्रीजिनदत्तसूरि ज्ञान भंडार.

लि० गोपीपुरा,

मु० सुरत.

बाबू रूपचंद चजेर.

नं. ११ क्लाइव स्ट्रीट,

मु० कलकत्ता.

भावनगर—आनंद प्रिन्टिंग प्रेस में शेठ देवचंद दामजीने मुद्रित किया ।



## श्रीमती छोटीबाई ओसवाल-कलकत्ता.

जन्म श्रावण शुदि ३ संवत् १९३५

जैन शासन की उन्नति के लिये उपधान तप आराधन महोत्सव आदि धार्मिक कार्यों में आपने तन, मन और धन का उदारदिल से जो भोग दीया है वह आप का जीवन की उज्वळ यशगाथा है। शेठ कनैयालालजी के माफिक आप ही साहित्य का प्रचार, धार्मिक उन्नति और समाजहित के कार्य में उदारदिल से अपूर्व सेवा बजा रहे हैं ।

आनंद प्रिन्टींग प्रेस-भावनगर

## ॥ प्रस्तावना ॥

श्रीगूर्जरधराधीशदुर्लभराजसभासमुद्रोल्लासनचन्द्रमसा श्रीचान्द्रकुलावतंसेन सुविहितवसतिमार्गप्रवर्त्तकेन खरतरबिरुदधारकेण विद्वज्जनचक्रवाकनयनानन्दनेन श्रीजिनेश्वरसूरिणा सकलभव्योपकाराय षट्स्थानकाख्य प्रकरण विरचितमिदम् ।

अस्य प्रकरणप्रथस्य विनिर्मातार श्रीमज्जिनेश्वरसूरयः केषा विनेयावतसा आसन् ? कस्मिन् समये खरतरबिरुद समासादितवन्त ? कॉंस्कॉंश्च निर्मितवन्तो ग्रथान् ? कदा कतमान् स्वपादपद्मपरागेण जनपदान् मडयामासुः ? इति जिज्ञासाया सक्षेपाद् अत्र परिचयो दीयते, उपदेशपदटीकाकारकाणा[1] अर्बुदाचलजिनचैत्यवृषभजिनप्रतिष्ठापकाणा श्रीजिनवर्धमानसूरीश्वराणा सुकुमारपादकमलेषु श्रीजिनेश्वरसूरय तेषा लघुभ्रातरो बुद्धिसागराचार्याः ससारसागरतरणपोत दीक्षा जगृहु, तत अल्पसमयेन सर्वसिद्धान्तमवगाह्य षड्दर्शनशास्त्रपारगा जाताः, अन्यदा श्रीवर्धमानसूरय श्रीजिनेश्वरबुद्धिसागराद्यष्टादश–साधुभिः परिवृता भूमडले विहरतः क्रमशो गूर्जरराष्ट्रे श्रीपत्तननगर गतवत , तत्र च जिनगृहनिवासलपटा चैत्यवासिसूराचार्या आसन्, तैश्चैत्यवासिभिश्च देशातरागतमुनीना वसतिमार्गविरोधाय स्वमतव्यसमर्थनाय च वादाय ते श्रीजिनेश्वरसूरय उत्तेजिता , तदानीं श्रीचौलुक्य

---

१ हारिभद्रीयोपदेशपदटीकाप्रशस्तिश्च ते—

जिनवचनविचारे नित्यमाश(स)क्तयोगै । सुविमलगुणरत्नै वर्धमानप्र [illegible] ॥

इयमुपदेशपदाना टीका रचिता जनावबोधाय । पचाधिकपंचाशद्युक्ते १०८५ सवत्सरसहस्रे ॥ ( ज० भां० सू० )

वंशोद्भवश्रीदुर्लभराजमहाराजसभायां राजमान्यविद्वज्जनसमक्षं चैत्यवासियतीनां श्रीजिनेश्वरसूरिभिः सह वादोऽभूत्, तदा प्रथमं सूराचार्यैः वसतिवासप्रतिषेधकं जिनगृहवाससमर्थकं स्वकपोलकल्पितशास्त्रप्रमाणं दर्शितम्.

अथ श्रीजिनेश्वरसूरिभिः कुमतांधकारनभोमणिशय्यंभवस्वामिविरचितदशवैकालिकसूत्रादिकानां वसतिवासप्रदर्शकं जिनगृहनिवासनिषेधकं च अनेकप्रमाणसंदर्भं दर्शयित्वा तेषां मतं खंडितम्, तदा चैत्याचार्याः प्रत्युत्तरदाने असमर्थाः जाताः, तदानीं चैत्यवासिनां शास्त्रविरुद्धश्लथाचारं प्रेक्ष्य श्रीजिनेश्वरसूरीणां जैनसिद्धान्ताविरुद्धाचारदर्शनेन श्रीपत्तनाधीशदुर्लभमहाराजैः 'खरतर'[2] इति बिरुदं दत्तम् पुनश्च गुरुत्वेनाङ्गीकृतास्ते सूरयः तेन राज्ञा, तदनन्तरं सूरीश्वराणामिलामण्डले विहारं कुर्वतां जिनचंद्राऽभयदेवधनेश्वरसूरिप्रभृतयोऽनेके शिष्या अभूवन् ।

पुनश्च वि० सं० १०८० वर्षे श्रीहारिभद्रीयाष्टकानां वृत्तिं विदधुः सं. १०९२ वर्षे लीलावतीकथां अकुर्वन्, सं. ११०८ वर्षे कथाकोषपंचलिङ्गीषट्स्थानकप्रमाणलक्ष्मादिग्रंथाः रचिताः ।

---

१ " अन्नट्ठ पगडंलेणं " श्रीजिनेश्वरसूरिणोक्त एवंविधे परगृहे वसंति साधवो न देवगृहे श्रीदुर्लभराजचित्तेऽतीव तत् लग्नं भणितं चाहो यथा वदंति एते तथैव ( गण. सा. ट )

२ अस्य शब्दस्य व्युत्पत्तिः–अतिशयेन खरा सत्यप्रतिज्ञा ये ते खरतराः यद्वा खः सूर्यः तद्वद् राजन्ते नि प्रतिमप्रतिभाप्राग्भारप्रभाभि प्रतिवादिविद्वज्जनसंसदि ये ते खरा अत एव तरन्ति भवाब्धिमिति तराः खराश्च ते तराश्च खरतरा ।

३ दुर्लभसेनाने थोडीची वर्षे राज्यकेले । त्याने आपला गुरु श्रीजिनेश्वरसूरीजी म्हणुनहोता त्याचे उपदेशाने जैनधर्माची शिक्षा स्वीकारून त्या धर्मान्तता मोठा प्रवीण जाल होता ईत्यादि । ( गुज. इति. )

प्रान्तसमये विधिपूर्वक अनशन कृत्वा स्वर्गं गता, इत्येव श्रीजिनेश्वरसूरय श्रीतीर्थंकरोपदर्शितवसतिमार्गप्रवर्तका: आसन्, एपां सूरीश्वराणां आजन्म निर्वाणसंवत्सरो न ज्ञायते, किन्तु एषा पूज्याना निर्मितग्रन्थेभ्य १०८० संवत्सरसमयेधाराभण्डले विहरत आसन् इति ग्रन्थात् अवबुध्यते ।

श्रीजिनेश्वरसूरित: सर्वत्र वसतिवासप्रवर्तित खरतरगच्छोऽपि प्रसिद्धिं जात अस्मिन् विपये बहूनि प्रमाणानि प्रसिद्धानि सन्ति तथाऽपि कानिचित् प्रासंगिकानि प्रदर्श्यन्ते—

वि० स० ११२० तमे वर्षे श्रीअभयदेवसूरि: स्थानाङ्गसूत्रवृत्तिप्रान्ते—

प्रबुद्धप्रतिबन्धप्रवक्तृप्रवीणाप्रतिहतप्रवचनार्थप्रधानवाक्–प्रसरस्य सुविहितमुनिजनमुख्यस्य श्रीजिनेश्वराचार्यस्य तदनुजस्य च व्याकरणादिशास्त्रकर्तुः श्रीबुद्धिसागराचार्यस्य इत्यादि ।

वि० स० ११३९ वर्षे श्रीगुणचन्द्रगणिविनिर्मितप्राकृतवीरचरित्रप्रशस्तिप्रान्ते—

भवजलेहि वीइसभत भविगसताण तारणसमत्थो । बोहित्थोव्व महत्थो सिरिजिणेसरो पढमो ॥ ५१ ॥

गुरुभीराओ धवलाओ सुविहिया साहुसती जाया । हिमवताओ गगुव्व निग्गया सयलजणपुज्जा ॥ ५२ ॥

---

१ सुविहित इति खरतरमुनि-गणमुख्य इति उक्तम् ।

२ सुविहितसाधुसतति जाता इति वाक्येन खरतरसततिप्रचलित इति ध्वनितम् शोभन विहित आचरित येषां साधुसाध्वीश्रावकाणा त सुविहिता, अ रा को ।

सं. ११३२, ११४१, ११६९, १२११, वर्षेषु क्रमशः जन्मदीक्षासूरिपदस्वर्गभाजः श्रीजिनदत्तसूरयः गणधरसार्द्धशतके—

तेसिं पयपउमसेवारसिओ भमरुव्व सव्वभमरहिओ । ससमयपरसमयपयत्थसत्थवित्थारणसमत्थो ॥ ६४ ॥
अणहिल्लवाडए नाडइव्व दंसियसुपत्तसंदोहे । पउरपए बहुकविदूसगे य सन्नायगाणुगए ॥ ६५ ॥
सड्डियदुल्लहराए सरसइअंकोवसोहिए सुहए । मज्झो—रायसहं पविसिऊण लोयागमाणुमयं ॥ ६६ ॥
नामायरिएहिं समं करियं वियारं वियाररहिएहिं । वसइहिं निवासो साहूणं ठविओ ठाविओ अप्पा ॥ ६७ ॥

सं. ११७१ वर्षे लिखितां कविपल्हविरचितपट्टावल्याम्[1]—

उज्झायणु तह वद्धमाणु खरतरवरलद्धउ । सुगुरुजिणेसरसूरि नियमि जिणचंदु सुसंजमि ।

वि० सं० १२१०, १२२३, १२७७, वर्षेषु क्रमशः जन्माचार्यपदनिर्वाणभाजः जिनपतिसूरयः संघपट्टकवृत्तिप्रारंभे—श्रीदुर्लभराजमहाराजसभायां अनल्पजल्पजलधिसमुच्छलदतुच्छविकल्पकल्लोलमालाकवलितबहलप्रतिवादिकोविदग्रामण्या संविग्नमुनिनिवहाग्रण्या सुविहितवसतिपथप्रथनरविणा वादिकेसरिणा श्रीजिनेश्वरसूरिणा श्रुतियुक्तिभिर्बहुधा चैत्यवासव्यवस्थापनं प्रति प्रतिक्षिप्तेष्वपि लाम्पट्याभिनिवेशाभ्याम् इत्यादि ।

सं. १२८५ श्रीपूर्णभद्रगणिविनिर्मिते धन्यशालिभद्रचरित्रप्रान्ते—

१ सं. ११७१ वर्षे श्रीजिनदत्तसूरीणां शिष्येण ब्रह्मचंद्रगणिना लिखिता ताडपत्रीयप्रतिकृतिः जेसलमीरदुर्गभाण्डागारे अद्याऽपि दृश्यते ।

श्रीमद्गुर्जरभूमिभूषणमणौ श्रीपत्तने पत्तने । श्रीमद्दुर्लभराजराजपुरतो यश्चैत्यवासिद्विपान् ॥
निर्लोठ्यागमहेतुयुक्तिनखरैर्वास गृहस्थालये । साधूनां समतिष्ठपन्मुनिमृगाधीशोऽप्रधृष्य परे ॥ १ ॥
सूरिः स चांद्रकुलमानसराजहसः, श्रीमज्जिनेश्वर इति प्रथितः पृथिव्यां ।
जज्ञे लसच्चरणरागभृदिद्ध-शुद्धपक्षद्वय शुभगतिं सुतरां दधानः ॥ २ ॥

स० १२९३ वर्षे द्वादशकुलकविवरणे उपाध्याय जिनपाल —
श्रीमच्चाद्रकुलांबरैकतरणे श्रीवर्द्धमानप्रभोः, शिष्यः सूरिजिनेश्वरो मतिवचःप्रागल्भ्यवाचस्पतिः ।
आसीद्दुर्लभराजराजसदसि प्रख्यापितागारवद्-वेश्मान्तस्थितिरागमज्ञसुमुनिव्रातस्य शुद्धात्मन ॥ १ ॥

स १३१७ वर्षे श्रावकधर्मप्रकरणवृत्तिप्रान्ते लक्ष्मीतिलकोपाध्याय —
पादोपानपहस्त्यकुग्रहकृतान् सिद्धान्तदृष्ट्यावसत्यध्वानं शुभसिद्धिलग्नमभितः प्रामाणिकत्व नयन् ।
स्थाने दुर्लभराजशक्रगुरुतां प्रापत्सुचन्द्रान्वयो-त्तस. सूरिजिनेश्वरः समभवत् त्रैविद्यवद्यक्रम. ॥ १ ॥

स १३३४ प्रभावकचरित्रे प्रभाचद्र —
जिनेश्वरस्ततः सूरिरपरो बुद्धिसागरः । नामभ्यां विश्रुतौ पूज्यै विहारेऽनुमतौ तदा ॥ ६२ ॥
श्रीमान् दुर्लभराजाख्यस्तत्र चासीद्विशांपति ॥ ४७ ॥
ततः प्रभृति सजज्ञे वसतीनां परपरा ॥ ८६ ॥

सं. १४१२ राजगृहगतपार्श्वनाथमंदिरप्रशस्तौ भुवनहितोपाध्यायः—

तदनु भुवनाश्रान्तख्यातावदातगुणोत्तरः सुचरणरमाभूरिः सूरिर्बभूव जिनेश्वरः ।
खरतर इति ख्यातिं यस्मादवाप गणोऽप्ययं परिमल कल्पश्रीप ..............डुगणोऽवनौ ॥ १७ ॥

सं. १४९७ वर्षे जेसलमेरुदुर्गस्थसंभवजिनालयप्रशस्तौ, इतश्च चंद्रकुले श्रीखतरविधिपक्षे—

श्रीवर्धमानाभिधसूरिराजो जातः क्रमादर्बुदपर्वताग्रे ॥
मंत्रीश्वरश्रीविमलाभिधानः प्राचीकरद्यद्वचनेन चैत्यं ॥ १ ॥
अणहिल्लपाटकपुरे यैर्दुर्लभराजपर्षदि विवादे । प्राप्तं खरतरबिरुदं जिनेश्वरास्सूरयो जज्ञुः ॥ २ ॥

सं. १५०१ वर्षे महोपाध्यायश्रीगुणरत्नगणिनिर्मिते षष्टिशतकप्रकरणवृत्तिप्रान्ते—

ततो गुरुजिनेश्वरः स्वरसतोऽपि संवेगवान्, बभूव विधिमार्गविच्च खरतरेत्यभिख्या यतः ।
प्रसिद्धिमगमत् मठाधिपतिसङ्घनिर्लोठना—न्नराधिपतिदुर्लभप्रथितपर्षदि प्रस्फुटम् ॥ ३ ॥

सं. १५०३ तपागच्छनायकसोमधर्मगणिनिर्मितोपदेशसप्तत्याम्—

पुरा श्रीपत्तने राज्यं कुर्वाणे भीमभूपतौ । अभूवन् भूतलाख्याताः श्रीजिनेश्वरसूरयः ॥ २ ॥
सूरयोऽभयदेवाख्यास्तेषां पट्टे दिदीपिरे । तेभ्यः प्रतिष्ठामापन्नो गच्छः खरतराभिधः ॥ ३ ॥

सं–१६९१ वर्षे श्री गुणविनयवाचकविरचिते सम्बोधसमितिवृत्तिप्रान्ते—

दुर्लभराजात् खरतरनिरुदमधुश्चैत्यवासिनो जित्वा । विदधुश्च वसतिवास जिनेश्वरास्तेऽभवस्तदनु ॥ ४ ॥

इत्यादिभि प्रमाणै वसतिवास प्रकटित श्रीजिनेश्वरसूरिणा, एव खरतरविरुद सम्प्राप्त च इति प्रकट ज्ञायते.

अत्र खरतरगणपट्टावल्यादिषु स० १०८० तमे वर्षे खरतरविरुद लिखित तद् असहमाना केचित् स्वकपोलकल्पितग्रन्थेषु स० १०८० तमे वर्षे दुर्लभराजो नासीत्, स तु स० १०६६ तमे वर्षे पत्तने राज्य प्राप्य स० १०७८ तमे वर्षे यात्रार्थं गतवान् तदा जिनेश्वरसूरि दुर्लभराजसभाया कथ खरतरविरुद प्राप्तवान् इति प्रलपन्ति ऐतिह्यविद , तत्प्रत्युत्तरमेवम्—

ननु प्रबन्धचिंतामणि–विचारश्रेणि–रत्नमाला–रासमाला–राजस्थान–गूर्जरदेशीय–प्राचीनार्वाचीन–इतिहास–ग्रन्थेषु श्रीदुर्लभराज राज्यप्राप्ति स्थितिकालश्च विषये वि स १०६५–६६ त ११–१२–१४ वर्षपर्यन्त भिन्नमतानि दृश्यते,

ग्रन्थकार स्वयमेवाह—' यथा श्रुत सकलितप्रबन्धै (प्र० चिं० ) प्राश्चात्यइतिहासग्रन्थकारस्तु अन्यग्रन्थान् अवलब्य कथकडचारणादिमुखात् च यथा यथा श्रुत तथा तथा अनुमीय प्रथित ग्रन्थम् एतत्परस्परविरोधभाजा१ ग्रन्थान् च अवलब्य स० १०८० तमे वर्षे दुर्लभराजो नासीत् इति कथन न युक्तम्, एषु परस्परलेखविरोधविषयेषु किं सत्यम् ? इति स्वयमेव विलोकनीयम् विचारशीलैः ।

---

१ ચાવડા વશનો અનુક્રમ તથા તેની સાલવારી પ્રબધ ચિંતામણીની જુદી જુદી પ્રતોમા બે રીતે મળે છે અને વિચારશ્રેણીમા ત્રીજીજ યોજના છે સમગ્રમ થભાષામા વાક્ય રચનામાં અવાતર પ્રબોધની ગોઠવણમા બધી રીતે શીથલ રચનાવાળો છે અને પ્રબધ ચિંતામણીની હાથ પ્રતોની ગડબડ પાઠાતરો કરતા પ્રક્ષિપ્તોએ ઉત્પન્ન કરેલી ગડબડથી આ બીજી રીતે ઘણા ઉપયોગી ગ્રથનુ ઐતિહાસિક મૂલ્ય કેટલેક અશે ઘટી જાય છે ( તા –૨૯–૧–૩૩ ) ગુજરાતી પત્રમાથી પાનુ ૧૭૩

श्रीदुर्लभराजजिनेश्वरसूरिविषये विविधग्रन्थादीन् समालोच्य प्रकटिते प्रमाणे तस्मिन् दोषाविष्करणं अस्मद्गमतात् किंचिदपि विरुद्धकथनकरणं मत्सर एव केवलः न तु परमार्थः।

पुनरपि गच्छाम्नायानभिज्ञा जल्पंति जिनवल्लभसूरिजिनदत्तसूरिभ्यां खरतरगच्छः प्रवृत्तः इत्यादि, तत्तु असत्यं एव, जिनवल्लभसूरिसमये श्रीवर्द्धमानसूरितः खरतरगणकल्पद्रुमस्य श्रीमधुकरखरतर इति नामाङ्किता प्रथमा शाखा जाता। श्रीजिनदत्तसूरिसमये श्रीजिनशेखरसूरितः श्रीरुद्रपल्लीयेतिनामधेया द्वितीया शाखा अभूत्, इत्यलम् प्रपंचेन।

अथ षट्स्थानकप्रकरणस्य भाष्यकारः श्रीजिनेश्वरसूरिबुद्धिसागरसूर्योः शिष्यः अभयदेवसूरिः स्वयमेव इत्थमाह प्रस्तुतप्रकरणभाष्यप्रान्ते—

मुणिपवरसिरिजिणेसरसूरीहि अणुग्गहट्ठाए। तप्पायपउमछप्पय मुणीससिरिअभयदेवसूरीहिं ॥ १ ॥
दुसमगममिच्छसुगमं विहियं नियसीसवयणेण ॥

उपाध्यायजिनपालोऽपि प्रस्तुतप्रकरणवृत्तिप्रारंभे—

सत्यपि गम्भीरार्थे, भाष्येऽभयदेवसूरिभिर्ग्रथिते। प्रतिपदमर्थाख्यानान्मम यत्नः सफल एवात्र ॥ २ ॥

इत्यनेन श्रीअभयदेवसूरिणा एव भाष्यं कृतं इति ज्ञायते।

अथ अस्य प्रकरणस्य वृत्तिप्रणेता जिनपतिसूरिशिष्य. जिनपाल[1] उपाध्यायः स्वयमेव इत्थं आह—प्रस्तुतप्रकरणवृत्तिप्रान्ते—जिनपति-

1 एतन्महाराया(?)ना परिचयो अपभ्रंशकाव्यत्रयीभूमिकायां विलोकनीयः जिज्ञासुभिः ॥

पर्दस्थानकसज्ञितप्रकरणस्य । वृत्ति
रितिसूरि'सद्गुणागाढयद्यैर्निबिडनिगडिते वाऽस्त्येति नो सयमश्री ॥ ६ ॥ तच्छिष्यो जिनपाल
व्यदधायेव अप्येतां ॥ ८ ॥ युग–रसदिनकर ( १२६७ ) सख्ये विक्रम ॥ १० ॥

एतैः वाक्यै श्रीजिनपालपाठकपुङ्गवेन जिनपतिसूरे शिष्यत्व स्वसत्तासमयश्च प्रतिपादित स्पष्टतया अपर च–चर्चरी–द्वादश-
कुलक–उपदेशरसायणादिग्रन्थाना वृत्तिः चक्रे ।

श्रीमद्जिनकृपाचन्द्रसूरीश्वरा स्वशिष्यप्रशिष्यै परिवृता वि स १९८३ तमे वर्षे जेसलमेरदुर्गे चातुर्मासस्थिर्ति कृतवन्त , तदानीं श्रीजिनभद्रसूरिसस्थापितज्ञानभाण्डागारे स्थिताना अतिजीर्णताडपत्रलिखितपुस्तकाना प्रतिकृतय कारिताः सूरिभि , तथा श्रीप्रवर्तक सुखसागरमहाराजोऽपि तद्ग्रन्थसशोधनकार्यं कुर्वाण कारयमाणश्च कतिपयान् अमुद्रितदुर्लभाश्च ग्रन्थान्–पर्दस्थानक–द्वादशकुलक-धन्यशालिभद्रचरित्रादीना मुद्रयितुम् ( मुद्रणयन्त्रविषयीकर्तुम् ) इच्छया प्रूफसञ्ज्ञका प्रतिकृतय कारिता अधुना तु श्रीजिनकृपा-चन्द्रसूरीश्वराणा उपदेशेन वगालदेशभूभामिनीभालभूषणकालिकातामहानगरीवास्तव्यस्य धर्मज्ञश्रेष्ठिकनैयालाल–चडेरस्य धर्म-पत्नी श्राविका छोटीवाइ इतिनामिका स्वकीयज्ञानावरणकर्मक्षयोपशमनाय परोपकाराय च एतत्प्रकरणरत्नमुद्रणे द्रव्यसाहाय्य कृतवती तस्मात् सा धन्या, पठनपाठनादिरूपेण साफल्य विदधतु सज्जना अपि इति प्रार्थयेयम् ।

प्रस्तुतप्रकरणरत्नस्य सशोधनावसरे प्राचीनार्वाचीनानि एतानि हस्तलिखितानि पुस्तकानि समुपलब्धानि—

प्रथम अणहिल्लपुरपत्तनस्थभाण्डागारत श्रीप्रवर्त्तकपदालङ्कृतश्रीकांतिविजयमहाराजशिष्यमुनिपुङ्गवचतुरविजयशिष्यपुन्यविजय-मुनिवर्याणा अनुपमकृपात सप्राप्त प्राचीन अष्टाविंशतिपत्रात्मकम्, द्वितीयम् वर्धमानकेम्प ( वढवाणकेम्प ) स्थितयोगनिष्ट

पन्यासश्रीकेसरविजयदेवविजयपुस्तकालयतः महोपाध्यायदेवविजयमहाराजैः आनाय्य प्रदत्तं अर्वाचीनं एकचत्वारिंशत्पत्रात्मकम्, तृतीयं अत्रैव श्रेष्ठिआणंदजिकल्याणजिपेढिस्थज्ञानभांडागारतः संप्राप्तं षड्विंशतिपत्रात्मकं श्रीमत्कुंवरजिसाहाय्येन, एतत् प्रकरणभाष्यपुस्तकं तु वटपद्रस्थ ( वडोदरास्थ ) आचार्य श्रीमोहनसूरिज्ञानभाण्डागारतः उपाध्यायश्रीप्रतापविजयमहाराजैः आनाय्य प्रदत्तं नूतनं चतुष्पत्रात्मकम् ।

एतत् पुस्तकत्रयेण संशोधनकर्मणि महत् साहाय्यं जातम् ततस्तेषां पुस्तकसाहाय्यकारकाणां महाशयानां भूरिभूरिधन्यवादप्रदानपुरस्सरं महतीं उपकृतिं स्मृतिपथं नयामः ।

श्रीहेमचन्द्राचार्यपाठशालाध्यापकेन पण्डितअमृतलालमहाशयेन वीरवाइजैनपुस्तकालयकार्यवाहकश्रीमत्पदमसीहीरजीनामधेयेन च प्रस्तावनालेखविषये अनेकपुस्तकावलोकनसाहाय्यं प्रदत्तं तयोः कल्याणं वाञ्छामि,

पुस्तकावलंबनेन विद्वद्वर्यप्रवर्त्तकसुखसागरमहाराजेन सावधानमनसाऽतिपरिश्रमेण संशोधितेऽप्यस्मिन् ग्रन्थे दृष्टिदोषवशात् अक्षरयोजकदोषाद्वा यत्र कुत्रचिदशुद्धयः भवेयुः तत्र कृपां विधाय संशोधनीयम् क्षन्तव्यं क्षमाधनैश्च विद्वद्गुणानुरक्तैः इति प्रार्थयते—

श्रीखरतरगणावतंसकअनेकज्ञानभण्डारधार्मिकविद्यालयोत्पादकश्रीजिनकृपाचन्द्रसूरीश्वरचरणारविंदमधुकरशिष्यरत्नप्रवर्त्तकमुनिसुखसागरमहाराजानां शिष्यः सज्जनकृपाकाङ्क्षी–मंगलसागरो मुनिः ॥ वि. सं. १९९० वर्षे अक्षयतृतीयादिने पादलिप्तपुरे

---

१ किन्तु अस्य भाष्यग्रन्थस्य एका प्रतिः मिलिता सापि अशुद्धप्रायत्वात् अस्माभिः न मुद्रापिता

॥ अर्हम् ॥

दुर्लभराजसदसीप्राप्तखरतरबिरुद–वसतिमार्गप्रकाशक–श्रीमज्जिनेश्वरसूरिविरचितम्–

# षट्स्थानकप्रकरणम् ।

श्रीमज्जिनपतिसूरिशिष्य–प्रवरपण्डित–श्रीमज्जिनपालविहितवृत्त्युपेतम्

धर्मोपदेशनाविधौ रदनोत्थकान्ति, सान्द्रीयती जनतनूर्विशदीचकार ।
अन्तर्विशुद्धिकरणीर्विजिगीषयेव, यस्य श्रियं जिनपतिस्तनुतात्स वीरः ॥ १ ॥

श्रीमत्सूरिजिनेश्वरेण रचिते षट्स्थानके स्थानके, मुक्तिप्रस्थितभव्यपान्थनिवहस्याध्वव्यवस्थाकृति ।
वृत्तिर्मन्दधिया मया प्रकरणे प्रारभ्यतेऽत्रादरात्, सञ्चिता सुगुरोरुपासनविधेः प्राप्तार्थलेशस्पृशा ॥२॥

* निगीषयेव इति प्रत्यन्तरे ।

१

सत्यपि गम्भीरार्थे, भाष्येऽभयदेवसूरिभिर्ग्रथिते। प्रतिपदमर्थाख्यानान्मम यत्नः सफल एवात्र ॥३॥

इह हि जगति प्रवरप्रभापटलप्रद्योतितदिक्चक्रवालप्रभावातिशायिरत्नराजि रत्नाकर इव विराजितत्रिजगदुदरान्तर्वर्त्तिपदार्थसार्थव्यवस्थापकप्रमाणोपपन्नस्याद्वादमतकोविदसंविग्नमहामुनिजनसंकुलेऽपि शुक्तिशकलाराग्रामाणिक्यनानाकुनयदेशकाखण्डपाखण्डिमण्डलवचःप्रपञ्चकदर्थ्यमानमानसानां प्रायः प्राणिनां निःस्वानामिव तथाविधप्रवरपुण्यपरंपरापरिपाकविकलानां न भवत्येव सम्भावा प्रयत्नरत्नैरिव स्याद्वादकोविदसंविग्नैः सद्गुरुभिः सह संपादितातिदारुणभवदारिद्र्योपद्रवविप्रयोगः संप्रयोगः। स हि विध्वंसकः कापथौघानां, मत्तमतङ्गजः संसारगतिवल्लीनां, सुधारससंसिक्तकल्पकन्दः सकलकल्याणफलपरंपराणाम्। तदुक्तम्—"जायइ सुहगुरुजोगो, सहसा सिवलच्छिपत्थियाण धुवं। पावंति जं अघन्ना, न कयावि मणिच्छियं अमयं ॥ १ ॥" तल्लाभमन्तरेण तु भवचक्रभ्रमणमव संपद्यते। यदुक्तम्—"धम्मायरिएण विणा, अलहंता सिद्धिसाहणोवायं। अरय व्व तुंबलग्गा, भमंति संसारचक्कम्मि ॥२॥" क्वचित्कथंचित्तथाविधभव्यतापरिपाकयोगात् संजातेऽपि तस्मिन् भव्यप्राणिनामसदुपदेशविषप्रदानेन विफलीक्रियमाणे दुर्वारनिष्कारणवैरिणेव पाखण्डिमण्डलेन भगवान् परमकरुणारसपाथोनिधिः कापथशतसंतमसतरुणतरतेजोनिधिर्गूर्जरधराधीशश्रीमद्दुर्लभराजसमक्षं विपक्षविक्षेपपुरस्सरं च

१ जायते शुभगुरुयोगः, सहसा शिवलक्ष्मीप्रस्थितानां ध्रुवम्। प्राप्नुवन्ति यदधन्याः, न कदापि मनइच्छितम् अमृतम् ॥

२ धर्माचार्येण विना, अलभमानाः सिद्धिसाधनोपायम्। अरका इव तुम्बलग्ना, भ्रमन्ति संसारचक्रे ॥

व्यवस्थापितसुविहितजनगृहिसदननिवासः प्रमोदितसविग्नमुनिजनमनःकुमुदखण्डः प्रवचनमहाप्रासादशिखरोन्नतकनककेतु-दण्डः सत्तर्कागमादिसमस्तविद्याप्रदातबोधरञ्जितसकलकोविदवरः शिवपथप्रस्थितसविग्नमुनिजनाग्रेसरः सर्वप्रकारपरित्यक्त-भूरिः श्रीमज्जिनेश्वरसूरिर्भव्यप्राणिगणोपचिकीर्षया निखिलशाक्यमौतादिपाखण्डिमण्डलाभिमतकुदेवकुगुरुकुधर्ममार्गखण्डन प्रमाणोपपन्नसर्वज्ञसद्गुरुसद्धर्ममार्गस्वरूपप्रतिपादनमण्डन पूर्वसुगप्रवरागमविरचितातिगम्भीरार्थगाथायुगलकविवरणरूपमिदं षट्स्थानकाख्य श्रावकवक्तव्यतापरनामक प्रकरणं चकार। तत्र चादावेव तावदेतत्प्रकरणमहापुरप्रवेशद्वारभूत गाथायुगल-कमुपन्यस्यति स्म—

कयवयकम्मयभावो, सीलत्तं चेव तह य गुणवंत्तं। रिउमइववहरणं चिय, गुरुसुस्सूसा य बोद्धव्वा १

पवयणकोसल्लं पुण, छट्ठ ठाणं तु होइ नायव्व। छट्ठाणगुणेहिं जुओ, उक्कोसो सावओ होइ २

अस्य व्याख्या—व्रतानि–नियमा, तानि चात्र स्थूलप्राणातिपातविरमणादीनि, तान्येव कर्म–परिकर्म पूर्वसेवा इत्यर्थः। तत्त्वार्थादेव यतिधर्मस्य। अथवा व्रतानि–सर्वथा प्राणातिपातविरमणादीनि, तेषां कर्म–परिशीलनमणुव्रतादिपालनरूपपूर्व-सेवालक्षणम्। ततः कृत विहित व्रतपरिकर्म–महाव्रतप्रतिपत्तिहेतूनामभ्यासो येन स तथोक्त, स एव कृतव्रतकर्मकः, तस्य भावस्तत्त्वम्। शब्दस्य हि प्रवृत्तिनिमित्त भावो यथा वृक्षस्य वृक्षत्वम्। तथा च येन निमित्तेनाणुव्रतप्रतिपत्त्यादिना श्राद्ध कृतव्रतकर्माऽभिधीयते स कृतव्रतकर्मकभावः। अथवा व्रतानि–अणुव्रतादीनि, तेषां परिशीलन मार्गश्रवणज्ञानादिरूपम्।

अयमभिप्रायः,—यथा मन्त्रादिसिद्धये मान्त्रिकेण पूर्वं शुचिस्थानपथ्याशनब्रह्मचर्यादिकमभ्यस्यते, तथा श्राद्धेनापि देशविरतेन भावतः सर्वविरत्यर्थिना पूर्वमणुव्रतादीनि निरतिचाराण्यनुपालनीयानि । अविरतेन तु देशविरत्यर्थिना श्रवणादीन्येवाभ्यसनीयानीति १ ॥ तथा शीलं—सच्चरितं तच्चायतनसेवादिरूपम् । ततः शीलवत्त्वं—सदाचारवत्त्वं, प्राकृतत्वाद्धकारलोपः । 'चः' समुच्चये । 'एव' इत्यवधारणे । तेन शीलवत्त्वमेवैकं श्राद्धस्य विशिष्टत्वमभिव्यनक्तीति । न चैतावता कृतव्रतकर्मत्वादीनां तदनभिव्यञ्जनकत्वप्रसक्तिः, शीलवत्त्ववत् तेषामप्येकैकशस्तदभिव्यञ्जनकत्वादिति भावः । एवमग्रेऽपि यथासंभवं वाच्यम् २ ॥ 'तह य गुणवत्तं' इति । 'तथा च' इत्यपि समुच्चये । "यावन्ति समुच्चये पदानि तावन्ति समुच्चयपदानि" इति न्यायेन न पौनरुक्त्यशङ्कावकाशः । स्वात्मन्यतिशयविशेषोत्पादका धर्मा गुणाः, ते च तत्त्वतः सम्यग्दर्शनादयः, तद्युक्तत्वं गुणवत्त्वं—सूत्ररुच्यादिमत्त्वमित्यर्थः ३ ॥ तथा ऋजुः—अकुटिला मतिः—बुद्धिस्तया व्यवहरणं—वृत्त्यर्थं व्यापरणं ऋजुमतिव्यवहरणं वचनाविसंवादादिरूपम् । 'चिय' इत्यवधारणे, स च शीलवत्त्वमेवेतिवद्भावनीयः ४ ॥ तथा गुरूणां—लोके लोकोत्तरे च गौरवार्हाणामाचार्यमातृपित्रादीनां (शुश्रूषा—) अभिमुखगमनादिप्रतिपत्तिलक्षणा सेवा गुरुशुश्रूषा । सा च 'बोद्धव्या' ज्ञातव्या श्रावकस्य स्थानत्वेन । षष्ठस्थानोद्देशपर्यन्तवर्तिज्ञातव्यपदादेव तत्तद्विशेष्यलिङ्गानुसारेण सर्वस्थानसंबन्धाद् गुरुशुश्रूषास्थानसंबन्धे लब्धेऽपि यदत्र बोद्धव्यपदोपादानं तद् समस्तस्थानानां गुरुशुश्रूषासाध्यत्वेन तस्याः सर्वोत्कृष्टत्वतो विशेषेण ज्ञातव्यताज्ञापनार्थमित्यर्थः ५ ॥ ६ ॥ 'प्रवचनकौशलमेव' जिनशासननैपुणमेव । 'पुनः' शब्दः पूर्वस्माद्विशेषणार्थः । षष्ठं स्थानं त्विति, तिष्ठति

श्रावकोऽस्मिन्नवहितमनस्कतया वर्त्तेत इति स्थान श्रावकस्यं विशिष्टत्वाभिव्यञ्जक आचारविशेष ॥ ६ ॥ 'तु' एवकारार्थ, स च योजित एव। 'भवति' वर्त्तते 'बोद्धव्य' ज्ञातव्यम्। ततश्चैतैः 'षट्स्थानगुणैः' षट्सख्यश्रावकानुष्ठानविशेषैः 'युक्त' सगतः, उत्कृष्यते शेषेभ्य इत्युत्कर्षः–उत्कृष्ट इत्यर्थः, 'श्रावकः' तत्त्वतो यथावस्थितभगवद्वचनश्रोता 'भवति' सपद्यते। शेषास्तु नाममात्रेणैव। इति द्वारगाथायुगलकार्थः ॥ २ ॥

अथैषां स्थानानां किमर्थमेव क्रमेणोपन्यासः? उच्यते—सर्वेषां परस्परतो हेतुहेतुमद्भावादेरेवमेव सिद्धेः। तथाहि–समस्तशेषस्थानसाध्यत्वेन श्रावकत्वपदव्याश्च परमप्रकर्षरूपत्वेन मूर्द्धाभिषिक्ततया व्रतपरिकर्मण आदावुपन्यासः। यत'— "ने विणा परिकम्मेण, सम्म सभवइ कज्जससिद्धी ॥ परमा परमपयफला, सुमतिणो मतसिद्धि व्व ॥ १ ॥" तदनन्तर तस्यैवाऽऽद्यकारणभूतस्य शीलवत्त्वस्य। यतः—"सीलं हि सयायारो, सामन्नेणावि जस्स सो नत्थि। अइबालो व्व कह सो, सावगधम्मस्स जोगो त्ति ॥ १ ॥" ततोऽपि शीलप्रधानकार्यभूतस्य गुणवत्त्वस्य। यतः–"सीलेणं वि किं तेण, सकासेण तु कासकुसुमस्स। जत्तो वरगुणवत्त, रमणिज्जफल न सपन्न ॥ १ ॥" गुणवत्त्वोपन्यासोत्तरकाल तु सामान्यतो

---

१ "श्रावक वि" इति प्रत्यन्तरे ॥ २ न विना परिकर्मणा, सम्यक् सभवति कार्यससिद्धि। परमा परमपदफला, सुमन्त्रिणो मन्त्रसिद्धिरिव ॥ ३ शील हि सदाचार, सामान्येनापि यस्य स नास्ति। अतिबाल इव कथ स, श्रावकधर्मस्य योग्य इति ॥ ४ शीलेनापि किं तेन, सकाशेन तु काशकुसुमस्य। यतो वरगुणवत्त्व, रमणीयफल न सपन्नम् ॥

गुणवरकार्यभूतस्य ऋजुमतिव्यवहरणस्य । यतः—" रिउववहरणं जीए, संपाडिज्जइ पसंसिया सा उ । सग्गुणलच्छी विउला, जलनिहिवेल व्व विलसंती ॥ १ ॥ " तदनन्तरं तु ऋजुमतिव्यवहरणस्यैव प्रधानकारणभूताया गुरुशुश्रूषायाः । यतः—" परमफलस्स वि हेऊ, गुरुसुस्सूसा पवड्ढिया नियमा । कप्पलय व्व समुज्जुय—ववहरणस्स उ किमिह चुज्जं ॥ १ ॥" ततोऽपि तस्या एव प्रधानकार्यभूतस्य प्रवचनकौशलस्य । यतः—" कह उ पवयणकोसल्लं, तेसिं संभवइ नणु जडाणं च । जेसिं गुरुसुस्सूसा, नाभिमुही भारइ व्व सया ॥ १ ॥ " तदेषामेवं क्रमोपन्यासे तात्पर्यम् । तत्रापि व्रतपरिकर्मणि यत् पूर्वं श्रवणस्याभिधानं तत् श्रवणस्यैव सर्वस्थानमूलत्वख्यापनार्थम् । उक्तं च—" सुच्चा जाणइ कल्लाणं, सुच्चा जाणइ पावयं । उभयं पि जाणई सोच्चा, जं सेयं तं समायरे ॥ १ ॥ " ननु तथापि किमेतत्स्थानषट्कयुक्तस्यैव श्रावकता ? उत श्रावकस्य सतः षट्स्थानयोगः ? न तावदाद्यः, तद्विकलस्यापि शास्त्रे श्रावकत्वश्रवणात् । तदुक्तम्—"धम्मरयणस्स जोग्गो, अक्खुद्दो १

---

१ ऋजुव्यवहरणं यया, संपाद्यते प्रशंसिता सा तु । सद्गुणलक्ष्मीर्विपुला, जलनिधिवेलेव विलसन्ती ॥ २ परमफलस्यापि हेतु—गुरुशुश्रूषा प्रवर्धिता नियमात् । कल्पलतेव समृजुक—व्यवहरणस्य तु किमिहाश्चर्यम् ॥ ३ कथं प्रवचनकौशल्यं, तेषां संभवति ननु जडानां च । येषां गुरुशुश्रूषा, नाभिमुखी भारतीव सदा ॥ ४ श्रुत्वा जानाति कल्याणं, श्रुत्वा जानाति पापकम् । उभयमपि जानाति श्रुत्वा, यत् श्रेयस्तत् समाचरेत् ॥ ५ धर्मरत्नस्य योग्योऽक्षुद्रो रूपवान् प्रकृतिसौम्यः । लोकप्रियोऽक्रूरो, भीरुरशठः सदाक्षिण्यः ॥

रूवव २ पगइसोमो ३ । लोयप्पिओ ४ अकूरो ५, भीरू ६ असढो ७ सदक्खिणो ८ ॥ १ ॥ लज्जालुओ ९ दयालू १०, मज्झत्थो सोमदिट्ठि ११ गुणरागी १२ । सक्कह १३ सपक्खजुत्तो १४, सुदीहदसी १५ विसेसन्नू १६ ॥ २ ॥ वुड्ढाणुगो १७ विणीओ १८, कयन्नुओ १९ परहियत्थकारी य २० । तह चेव लद्धलक्खो २१, इगवीसगुणो हवइ सड्ढो ॥ ३ ॥" नापि द्वितीय'। यदा हि प्रागेव श्रावकत्वमस्ति तदा किमनर्थकेन पद्स्थानयोगेन ?। किञ्च—'छट्ठाणगुणेहिं' इत्यादिना विरुद्धाभिधानेन ?, इति चेत्, नैवम्, सामान्यविशेषभावेनोभयस्याप्युपपत्ते'। तथाहि-यत् शास्त्रे स्थानयोगमन्तरेणापि श्रावकत्व श्रूयते तत् सामान्येन विशिष्टश्रावकत्वयोग्यतामाश्रित्येत्यवगन्तव्यम्, अत एव तत्र 'धम्मरयणस्स जोग्गो' इत्युक्तम्। पद्स्थानयोगे तूत्कृष्टश्रावकता, अत एव तत्र, 'उक्कोसो सावगो होइ' इति प्रत्यपादि। तदुद्देशेन च—"संपत्तदसणाई, पइदियह जइजणा सुणेई य। सामायारिं परम, जो खलु त सावगं विंति ॥ १ ॥" इत्यादि शास्त्रम्। शेषं त्वपुनर्वन्धकाद्यवस्थावर्तिस्वरूपाभिधानपरमिति व्यवसेयम्। अपुनर्बन्धकाद्यवस्थायां हि प्रणश्यतीव प्रबलतरमिथ्याभिनिवेशपिशाच, समुन्मिषतीव प्रभाकराकार' सद्बोध, समुल्लसन्तीव धर्मशुश्रूषाद्यङ्कुरकोट्य इत्यलमतिप्रसङ्गेन। प्रकरणादौ नमस्कारानुपन्यासचर्चाप्यत एव न क्रियत इति प्रस्तुतमारभ्यते।

---

१ लज्जालुको दयालु-र्मध्यस्थः सौम्यदृष्टिर्गुणरागी। सत्कथ सपक्षयुक्तः, सुदीर्घदर्शी विशेषज्ञः ॥ २ वृद्धानुगो विनीतः, कृतज्ञक परहितार्थकारी च। तथा चैव लब्धलक्ष्य, एकविंशतिगुणो भवति श्राद्ध ॥ ३ सम्प्राप्तदर्शनादि, प्रतिदिवस यतिजनात् शृणोति च। सामाचारीं परमां, य खलु त श्रावक ब्रुवते ॥

अथ प्रकरणावतारायाह—अत्र व्याख्येति ।

'अत्र' अस्मिन् गाथाद्वये विशिष्टा—असंक्षिप्तनिःशेषाभिधेयविषयत्वेन प्रधाना आख्या—भणितिर्व्याख्या । अथवा 'अत्र' अस्मिन् गाथाऽभिधेये स्थानषट्के विविधा—चतुष्टा(ष्टया)दिभेदाभिधानेन नानाप्रकारा आख्या व्याख्या क्रियत इत्यध्याहारः । 'इति' प्रकरणावतारावान्तरवाक्यार्थः ॥

साम्प्रतं व्रतपरिकर्मणो भेदोद्देशपुरस्सरं तत्प्रथमभेदं श्रवणं प्रतिपादयन् यादृशाद्गुरोर्यादृशेन च यत् कर्तव्यं तदाह—

**कयवयपरिकम्मत्तं, चउव्विहं सुणइ ताव पढमं तु । गुरुणो गीयत्थाओ, विणएण अणुग्गहपरो य ॥३॥**

व्याख्या—'कृतव्रतपरिकर्मत्वं' पूर्वोक्तशब्दार्थं तत् 'चतुर्विधं' चतुष्प्रकारम् । तदुक्तम्—"[1]कयवयपरिकम्मत्तं, चउव्विहं सुणइ जाणइ तहेव । इच्छइ गिण्हइ तत्थ य, सुणेइ जं जह य तं वुच्छं ॥१॥" 'शृणोत्येव' आकर्णयत्येव, तावदित्युपक्रमे । 'प्रथमं' पूर्वं ज्ञानेच्छाग्रहणेभ्यः । तुरेवकारार्थो योजित एव । 'गुरोः' ज्ञानादिगुणगणोपेततया सच्छास्त्रोपदेशकतया च गौरवार्हस्याचार्यादेः सकाशात् । तदुक्तम्—"धर्मं तीर्थकृतां यथैव गदितं तत्त्वं तथैवानिशं, यो जानाति करोति चाऽऽदिशति चाऽसङ्गः स दिव्यो गुरुः । तस्योपास्तिमपास्तकल्मषभरां भक्त्या गृहस्थैर्दृढं, कुर्वद्भिः परमोपदेशमिषतः किं किं फलं

१ कृतव्रतपरिकर्मत्वं, चतुर्विधं शृणोति जानाति तथैव । इच्छति गृह्णाति तत्र च, शृणोति यद् यथा च तद् वक्ष्ये ॥

नाप्यते ? ॥ १ ॥ " कीदृशाद्गुरोः ? 'गीतार्थात्' सम्यक्प्रवृत्तिहेतुसूत्रार्थविद' । तदुक्तम्—"[1] गीयं भण्णइ सुत्तं, अत्थो तस्सेव होइ वक्खाणं । गीयस्स य अत्थस्स य, संजोगा बिंति गीयत्थं ॥ १ ॥ " अनेन चासाधारणविशेषणोपादानेन समस्ततद्गुणोपसंग्रहः सूच्यते । तादृशस्यैव शुद्धधर्मप्ररूपकत्वाधिकारित्वात् । तदुक्तम्—"[2] देसकुलजाइरूवी, संघयणी धिइजुओ अणाससी । अविकत्थणो अमाई, थिरपरिवाडी गहियवक्को ॥ १ ॥ जियपरिसो जियनिद्दो, मज्झत्थो देसकालभावन्नू । आसन्नलद्धपइभो, णाणाविहदेसभासन्नू ॥२॥ पंचविहे, आयारे, जुत्तो सुत्तत्थतदुभयविहन्नू । आहरणहेउकारण-नयनिउणो गाहणाकुसलो ॥ ३ ॥ ससमयपरसमयविऊ, गम्भीरो दित्तिमं सिवो सोमो । गुणसयकलिओ जुग्गो, पवयणसारं परिकहेउं ॥४॥ " साम्प्रतं हि देवादिस्वरूपस्यापि गुरूपदेशमन्तरेण दुर्ज्ञेयत्वात् परीच्य धर्मार्थिना विशेषविद् गुणगणोपेत एव सद्गुरुरङ्गीकार्य इति विशेपतस्तद्गुणोपवर्णनम् । अनेन च सद्गुरुस्वरूपाभिधानेन पाखण्डिमण्डलाभिमतगुरूणां

---

१ गीतं भण्यते सूत्रम्, अर्थस्तस्यैव भवति व्याख्यानम् । गीतस्य चार्थस्य च, संयोगाद् ब्रुवते गीतार्थम् ॥ २ देशकुलजातिरूपी, संहननी धृतियुतोऽनाशंसी । अविकत्थनोऽमायी, स्थिरपरिपाटिर्गृहीतवाक्य ॥ ३ जितपरिषद् जितनिद्रो, मध्यस्थो देशकालभावज्ञ । आसन्नलब्धप्रतिभो, नानाविधदेशभाषाज्ञः ॥ ४ पञ्चविधे आचारे, युक्त सूत्रार्थतदुभयविध( धि )ज्ञः । आहरणहेतुकारणनयनिपुणो ग्राहणाकुशलः ॥ ५ स्वसमयपरसमयविद्, गभीरो दीप्तिमान् शिवः सौम्य । गुणशतकलितो योग्यः, प्रवचनसारं परिकथयितुम् ॥

सञ्ज्ञानमहाव्रतादिविकलानामगुरुत्वमर्थादुक्तं भवति। तदुक्तम्—"सर्वाभिलाषिणः सर्व–भोजिनः सपरिग्रहाः। अब्रह्मचारिणो मिथ्योपदेशा गुरवो न तु ॥ १ ॥" कथं शृणोति ? इत्याह 'विनयेन' नम्रत्वमनःप्रसादाञ्जलिप्रग्रहादिप्रतिपत्तिलक्षणो विनयस्तेन करणभूतेन । 'अनुग्रहपरः' इति, उपकारनिष्ठमनाः 'अनुगृहीतोऽस्मि' इति मन्यमान इत्यर्थः। अनेन च तस्यार्थित्वं दर्शितं भवति । तदुक्तम्--"अत्थी उ जो विणीओ" इत्यादि । 'च' अनुक्तसमुच्चये । तेन सामर्थ्ययुक्ता-प्रतिकुष्टत्वलक्षणमपि रूपद्वयमागमप्रसिद्धं तस्य समुचितं भवति। तत्त्वतस्तादृशस्यैव तथाश्रवणोपपत्तेः। इति गाथार्थः ॥३॥

अथ प्रश्नपूर्वकं श्रोतव्यवस्तुतत्त्वमुपादिशन् श्रवणविधिमाह—

**को देवो को धम्मो, को व तयाराहणे उवाउ त्ति। गीयत्थपायमूले, सुणेइ विगहाइपरिमुक्को ॥४॥**

व्याख्या—'कः' किंलक्षणः 'देवः' शक्रादीनामपि स्तोतव्यतयाऽऽराध्यतमः। कः 'धर्मः' दुर्गतिगर्तनिपतज्जन्तु-जातधारणप्रवणः परिणामस्तत्पूर्वकमनुष्ठानं च। को वा 'तदाराधनोपायः' देवप्रसादनविधिः। वा शब्दः समुच्चये। ह्रस्वत्वं प्राकृतत्वात् । "यस्य येनार्थसंबन्धो दूरस्थस्यापि तस्य सः" इति न्यायाद् व्यवहितस्यापि देवस्य तच्छब्देन परामर्शः। इतिशब्दः प्रष्टव्यवस्तुसमाप्त्यर्थः। एतत् सर्वं 'गीतार्थपादमूले' पूर्वोपदर्शितस्वरूपाचार्यादिसमीपे। अत्र च पुनर्गीतार्थ-ग्रहणं कचित्कदाचिद्गुरोरभावे सामान्यसाध्वादेरपि गीतार्थसकाशात् श्रोतव्यमिति ज्ञापनार्थम्, कालादिदोषात् शेषसम-ग्रगुणाभावेऽपि व्याख्यातुर्गीतार्थत्वस्याभ्यर्हितत्वेन सर्वाधिकारित्वसमर्थत्वात्। 'शृणोति' आकर्णयति 'विकथादिपरिमुक्तः'

स्त्र्यादिविरुद्धकथाविकलः, धर्मकथाप्रस्तावे शेषकथायाः सर्वस्या एव विकथात्वात् । तदुक्तम्—" इत्थिकहा भत्तकहा, रायकहा चोरजणवयकहा य । नडनट्टजल्लमल्लिय, सा विकहा देसिया समए ॥ १ ॥ " अत्र च ' जल्ल त्ति ' वरत्राखेलका, 'मल्लियत्ति' मल्ला । आदिशब्दान्निद्रादित्यागग्रहः । तत्त्यागाच्च शेषसमस्तश्रवणविधिपरिग्रहः । तदुक्तम्—" निद्दाविगहा-परिव–ज्जिएहिं गुत्तेहिं पजलिउडेहिं । छन्दमणुयत्तमाणेहिं, उवउत्तेहिं सुणेयव्व ॥ १ ॥ " इति गाथार्थ ॥ ४ ॥

अथाद्यप्रश्नस्य रागादिभी रहित एव देव इत्युत्तरमभिधित्सुस्तेषामनर्थहेतुत्व तद्वतां चानर्थसपत्तिं तावदाह—

**रागो दोसो मोहो, तिन्नि वि ससारकारणं एए । रागधा जमणत्थ, लहंति न तरामि त भणिउ ॥५॥**

व्याख्या—'राग'' अभिष्वङ्गलक्षण , 'द्वेषमोहौ ' वक्ष्यमाणलक्षणौ । एते त्रयोऽपि, न त्वेतेष्वेकतम एवेत्यपिशब्दार्थ । ' ससारकारण ' भवनिबन्धन भवन्ति । अत' कथ तद्वान् देवो भवति ? तस्य वीतरागतया सर्वज्ञत्वेनाभिमतत्वादित्यभिसन्धिः । अथैतेषु मध्यात् प्रथम तावद् रागविशेषस्य कामस्यैव चेष्टित फल चोपदिदर्शयिषुस्तत्फलस्य वचनागोचरत्वमाह–' रागान्धा. ' कामान्धा 'ज' इति य कञ्चनानिर्वाच्यस्वरूपम् ' अनर्थ ' व्यसनम्–इह हि लोके निरन्तरार्तध्यानचयव्याध्यादिक परलोके तु नरकादौ तप्तायोमययोषिदालिङ्गनादिकमतिदु'सह ' लभन्ते ' प्राप्नुवन्ति । 'त' अनर्थ ' न तरामि '

---

१ स्त्रीकथा भक्तकथा, राजकथा चौरजनपदकथा च । नटनाट्यजल्लमल्ला , सा विकथा देशिता समये ॥ २ निद्राविकथापरिवर्जितैर्गुप्तै प्राञ्जलिपुटैः । छन्दमनुवर्त्तमानै–रुपयुक्तैः श्रोतव्यम् ।

न शक्नोम्यहमिति प्रकरणकृदाह 'भणितुं' वक्तुमपि, अतिप्रचुरत्वात्तस्य इति गाथार्थः ॥ ५ ॥

अथ तच्चेष्टितमाह—

**हीलिंति धम्मिवग्गं, मग्गं निंदिंति बिंति उम्मग्गं । चाडूणि इत्थिवग्गे, करिंति पाएसु निवडंता ॥६॥**

व्याख्या—'हीलयन्ति' तदनुष्ठानतिरस्कारेणावमानयन्ति 'धर्मिवर्गं' धार्मिकजनसमूहं, लौकिकधर्ममात्रप्रवृत्तमपि, किं पुनर्लोकोत्तरिककेशोल्लुञ्चनब्रह्मचर्यादिदुष्करानुष्ठानप्रवृत्तम् । तथा च तत्प्रलापाः—"स्त्रीमुद्रां झपकेतनस्य महतीं सर्वार्थसंपत्करीं, ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलाकाङ्क्षिणः । ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः, केचित् पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ॥१॥" तथा 'मार्गं' तपःसंयमादिलक्षणं मोक्षपथं 'निन्दन्ति' अपभाषन्ते । तथा चाहुः—"तपांसि यातनाश्चित्राः, संयमो भोगवञ्चना ।" इति । तथा 'ब्रुवते' प्ररूपयन्ति पुरुषार्थतयेति शेषः, 'उन्मार्गं' विषयप्रवृत्तिप्रधानं दुर्गतिपथम् । यदाहुः—"पिब खाद च साधुशोभने[1] ! यदतीतं वरगात्रि ! तन्न ते । न हि भीरु ! गतं निवर्तते, समुदयमात्रमिदं कलेवरम् ॥१॥" तथा 'चाटूनि' दैन्याभिव्यञ्जकसामवादविशेषास्तानि च 'स्त्रीवर्गे' योषिज्जने 'कुर्वन्ति' विदधति 'पादयोः' चरणयोः 'निपतन्तः' प्रणमन्तः । एतद्धि सत्पुरुषाणामतीव लज्जावहं, कामान्धानां त्वन्यदप्येवंविधं मण्डनमिव ॥ इति गाथार्थः ॥ ६ ॥

१ अन्यत्र तु—'चारुलोचने !' इति दृश्यते ।

तदेव कामचेष्टितं तत्फलं चाभिधायाऽथ रागवतोऽदेवत्वमापादयिष्यन् सर्वजनसाधारणचरितत्वमाह—

**सव्वे-वि-हु जइ जीवा, मेहुणसन्नाय हदि वट्टति। साहारणम्मि चरिए, कह देवो होइ अब्भहिओ ७**

व्याख्या—'सर्वेऽपि' समस्ता अपि, न तु केचिदेवत्यपिशब्दार्थः। 'हुः' एवकारार्थः। यदीत्यभ्युपगमे। 'यदि' चेत् 'जीवाः' प्राणिन-एकेन्द्रियादयः पञ्चेन्द्रियान्ताः 'मैथुनसञ्ज्ञायां' मोहवेदोदयसपाद्याध्यवसायविशेषरूपायां, हन्दीत्युपदर्शने, दृष्टमेतदित्यर्थः, 'वर्तन्ते' प्रवृत्तिं कुर्वन्त्येव। तत्र संज्ञिपञ्चेन्द्रियाणां तावत्तत्र प्रवृत्तिः स्फुटप्रतीतिरेव। एकेन्द्रियाणामव्यक्तसञ्ज्ञानामप्यशोककुरुबकादीनां वनस्पतिविशेषाणां रणन्नूपुरतरुणीचरणताडनमुखासवप्रक्षेपादिविधानतो हर्षविशेषजन्यपुष्पोद्गमोपलम्भादनुमीयते। तद्दृष्टान्तेन पृथिव्यादीनामपि। तथा च रागवतो देवस्यापि मैथुनप्रवृत्तौ[1] 'साधारणे' सर्वप्राणिनां समाने 'चरिते' चेष्टिते सति 'कथं' केन प्रकारेण 'देवः' पूज्यतमः 'भवति' सपद्यते 'अभ्यधिकः' शेषप्राणिभ्योऽत्यन्तमुत्कृष्टः? न कथञ्चिदित्यर्थः, उत्कर्षहेतो रागाभावस्य सर्वथाप्यभावात्। इति गाथार्थः॥७॥

सांप्रतं सर्वजनसमानचरितत्वेन रागिणो देवत्वाभावमुपदर्श्य तद्रहितस्य देवत्वमुपसंहरन्नाह—

**जइ सो वि समाणगुणो, लोगेण तस्स तारगो कह णु। तम्हा रागविमुक्को, देवो पडिवज्जियव्वो त्ति ८**

---

१ 'मैथुने प्रवृत्तौ' इत्यपि प्रत्यन्तरे।

२

व्याख्या-यदीत्यभ्युपगमे । 'यदि' चेत् 'सोऽपि' देवत्वाभिमतोऽपि, आस्तामन्यः, किम्? इत्याह-'समानगुणः' प्रणा-
विषयाद्यासेवनेन तुल्यधर्मा 'लोकेन' रागादिमता सामान्यजनेन तदेति शेषः। 'तस्य' सामान्यजनस्य 'तारकः' प्रणा-
मादिना संसारासिन्धुपारप्रदः 'कथं नु' इत्यनुस्वारलोपः प्राकृतत्वात्, केन प्रकारेण ?, नुर्नन्वर्थे अक्षमायाम् । ततश्च न
क्षम्यत एतत्-यदुतासावपि तारक इति । ननु कः सचेतनः सरागस्य देवत्वमभ्युपेयात् ? वीतरागस्यैव सर्वकर्तुरनादिसि-
द्धस्येश्वरादेर्देवत्वेनाभ्युपगमात्, ततः किमनेनानभ्युपगतोपालम्भेन ? इति चेत्, सत्यमेतत्, किन्तु तस्य सदा स्त्रीसंसर्गि-
त्वेन वीतरागताया एव चिन्त्यत्वात् । तथा चोक्तं वाक्पतिराजेन—"देहद्धद्धपरिट्ठिय-गोरिहराराहणिक्कहियय व। खंडत्तणेण
पणमह, परिट्ठियं तिनयणमयंकं ॥ १ ॥" तथा—"गेणवइणो सइ संगय—गोरीहरपिम्मरागविलियस्स । दन्तो वाम-
मुहद्धंत,-पुंजिओ जयइ हासु व्व ॥ २ ॥" न च सर्वमेतदर्वाचीनावस्थस्यैवेति वाच्यम् । अनादिसिद्धत्वरूपपरावस्थायाः
सर्वकर्तृत्वस्य च प्रमाणविरोधात् । एवं विष्णुप्रभृतिष्वपि वाच्यम् । रागद्वेषाभाववतो रागद्वेषमोहाभाववतश्च देवत्वोपसंहा-
रस्य वक्ष्यमाणत्वेऽपि यदत्र केवलरागाभाववतो देवत्वोपसंहरणं तद्दोषलेशसद्भावस्यापि सर्वथा देवत्वस्याभावख्यापनार्थमि-
त्यवगन्तव्यम् । यतः समानगुणस्य तारकत्वं नोपपद्यते, तस्मात्कारणात् 'रागविमुक्तः' नीराग एव 'देवः' आराध्यतमः
'प्रतिपत्तव्यः' अङ्गीकार्यो मुक्त्यर्थिभिराराध्यत्वेन । इतिशब्दो रागानुगतवक्तव्यतासमाप्त्यर्थः । इति गाथार्थः ॥ ८ ॥

१ देहार्धार्धपरिष्ठितगौरीहराराधनैकहृदयमिव । खण्डत्वेन प्रणमत, प्रतिष्ठितं त्रिनयनमृगाङ्कम् ॥ २ गणपतेः सदा संगत-
गौरीहरप्रेमरागव्रीडितस्य । दन्तो वाममुखार्धान्त-पुंजितो जयति हास इव ॥

अधुना द्वेषस्यापि फलं चेहैव चाभिधित्सुस्तल्लक्षणं प्राह—

**दोसो वि मच्छरित्तं, परगुणउवघायकारिया बुद्धी । परउवघायपरो वा, अज्झवसाउ त्ति दोसो उ ९**

व्याख्या—'द्वेषोऽपि' अमर्षोऽपि 'मत्सरित्वं' परगुणासहिष्णुत्वम्, तदेव किम्? इत्याह—'परगुणोपघातकारिता बुद्धिः' 'कथं मयाऽन्यगुणा हन्तव्या ?' इति परगुणोपघातकारितायां परगुणोपघातकारिका या सामान्येन मतिः । गाथान्तवर्ती द्वेषशब्द एव योज्यः, 'परोपघातपरो वा' अन्यजनव्यापादननिष्ठो वा 'अध्यवसायः' परिणामविशेषो द्वेष, इति गाथान्ते समन्तस्यते । पुनर्द्वेषपदोपादानं तु लक्षणान्तरसंबद्धतया न दुष्टमिति । पूर्वत्र हि गुणेष्वेव, अत्र तु गुणिन्यपि घातबुद्धिः । तथा पूर्वत्र सामान्येन, अत्र तु शत्रुप्रभृतिविशेषनिष्ठतयेति विशेष । 'इति' द्वेषलक्षणपरिसमाप्त्यर्थः । 'तुः' पूरणार्थः । यद्वा सर्वेऽप्येते द्वेषस्यैव पर्याया, अतश्चैवंविधद्वेषवान् कथं देवः ? इत्यभिप्रायः । इति गाथार्थः ॥ ९ ॥

सांप्रतं द्वेषफलस्याप्यत्यन्तं वचनागोचरत्वमाह—

**दोसेण जमणत्थं, जीवो पावेइ गरहणाईयं । को तं वन्नेउमलं, जीवन्तो वासकोडिं पि ॥ १० ॥**

व्याख्या—'द्वेषेण' अमर्षेण हेतुभूतेन 'य' कमपि 'अनर्थं' व्यसनं 'जीव.' प्राणी 'प्राप्नोति' लभते । जात्यपेक्षयैकवचनम् । 'गर्हणादिकम्' गर्हणं तत्समक्ष निन्दनम्, आदिशब्दात् खिंसादिपरिग्रहः । दीर्घत्वं प्राकृतत्वात् । इहभवे वाचनिकाऽशुभफलप्राप्तिस्तावदेवम्, कायिकीं तु ग्रन्थकार एव दर्शयिष्यते । परभवे तु क्रकचपाटनकुम्भीपाकादिकं महाघोरं फलमिति

आदिशब्दार्थः । 'कः' पुरुषविशेषः 'तं' अनर्थं द्वेषसंपाद्यं 'वर्णयितुं' उत्कीर्तयितुं 'अलं' समर्थः ?, न कश्चिदित्यर्थः । कीदृक् ? इत्याह—'जीवन्' प्राणान् धारयन् 'वर्षकोटिमपि' वत्सरलक्षशतमपि, आस्तां वर्षशताद्यायुरित्यपिशब्दार्थः; अनन्तत्वात्तदनर्थस्य । इति गाथार्थः ॥ १० ॥

अथ तच्चेष्टितमाह—

**पिइमाइभइणिभज्जं, दोसेणं हणइ पुत्तमवि निद्धं । परलोयाणमकंडे, कुविओ तं नत्थि जं न करे ११**

व्याख्या–पित्रादयः प्रसिद्धाः । पितृमातृभगिनीभार्यमिति समाहारद्वन्द्वः । एतत्सर्वं पुत्रपर्यन्तं 'द्वेषेण' अमर्षेण हेतुभूतेन 'हन्ति' विनाशयति । अपिर्भिन्नक्रमः, तेन स्निग्धमपि, आस्तामुदासीनं द्विष्टं चेत्यपिशब्दार्थः । पुत्रस्य पृथग्निर्देशो गृहकुटुम्बाद्याधारत्वेनातिस्निग्धत्वख्यापनार्थः । एतच्च कोणिकराजपरशुरामाद्युदाहरणैः सर्वं सुप्रसिद्धमेव । एवं 'परलोकानां' आत्मव्यतिरिक्तानां पित्रादीनामेव । अथवा पित्रादिभ्यः स्वजनेभ्योऽन्येषां प्रातिवेश्मिकादीनां लोकानां 'अकाण्डे' अपराधाभावेनाप्रस्ताव एव 'कुपितः' रुष्टः सन् 'तत्' अकृत्यं 'नास्ति' न विद्यत एव जगति 'यत्' असौ द्वेषवान् 'न करोति,' स्वपरलोकेषु वधाक्रोशमारणपर्यंतानन्तानर्थसार्थसंपादकत्वात्तस्य । इति गाथार्थः ॥ ११ ॥

अथैहभविकं कायिकं, तस्यानर्थफलमाह—

**पच्छा लोएणं सो, उब्बज्झइ हम्मई य सूलाए । पोइज्जइ तिक्खाए, छिज्जइ असिघायमाईहिं १२**

व्याख्या–"पश्चात्" इति स्वजनादिवधानन्तरं 'लोकेन' राजादिष्टदण्डपाशिकादिजनेन 'सः' इति स्वजनादिहन्ता 'उद्बध्यते' कण्ठपाशादिबन्धेन अधोमुखपादादिबन्धेन वा वृक्षादौ समम्यते, 'हन्यते च' मुष्टियष्टिलोष्ठादिभिराभूमिपातं ताड्यते, चः समुच्चये, 'शूलायां' वा 'तीक्ष्णायां' अतिनिशिताग्रस्थूणायां 'प्रोयते' मर्मप्रदेशव्यधपूर्वकं स्यूयते, 'छिद्यते' वा शिरश्छेदादिना द्विधा क्रियते, 'असिघातादिभिः' खड्गकुन्तप्रहारादिभि । इति गाथार्थः ॥ १२ ॥

रागद्वेषयोरन्यतरभावेऽप्यन्यतरस्याभावात् क्वचिदीषन्निर्दोषता भविष्यतीति शङ्कानिरासाय तयोः कृतकत्वानित्यत्वयोरिवान्योन्याविनाभावमाविर्भावयन्नाह—

**रागविसयादभिन्ने, दोसो तब्बिसयगोयराणन्ने । रागो तम्हा दुन्निवि, अन्नोन्नगया इमे लोए ॥१३॥**

व्याख्या–'रागविषयात्' सदानुकूलत्वेन प्रीत्युत्पत्तिस्थानाद्योषिदादेरिन्द्रियार्थात्, 'अभिन्ने' अभेदवति तस्मिन्नेव विषय इत्यर्थः। कुतोऽपि प्रतिकूलेऽतथाविधेऽपि वा विपर्ययात्तथाविधबुद्धिविषये, 'द्वेषः' क्रोधो भवति, यथाऽन्तःपुरदाहादेशो चेल्लनादेव्यां श्रेणिकस्य । तथा 'तद्विषयगोचरानन्यस्मिन्' इति तद्विषयो–द्वेषविषय', स चासौ गोचरश्च–इन्द्रियार्थश्चेति कर्मधारयस्तस्मात् । तेनायमर्थः–अत्यन्तप्रतिकूलत्वेन द्वेषोत्पत्तिस्थानाद्गोचराच्छत्रुप्रभृतेरनन्यस्मिन्–तस्मिन्नेव कुतोऽप्यनुकूलेऽतथाविधेऽपि वा विपर्ययात् तथा बुद्धिविषये 'रागः' प्रीतिर्भवति, यथा पर्युषणायां चन्द्रमोक्षादेशे प्रद्योतवत्सराजवदुदायननृपस्य । यत एवमेकविषयत्वमनयोः 'तस्मात्' ततो हेतोः द्वावपि 'अन्योन्यानुगतौ' एकविषयत्वेन परस्परानुषक्तौ

'इमौ' एतौ रागद्वेषौ । यथा चैवं तथा प्रदीपे प्रकाशोष्णस्पर्शाविवैकाधारावपि, नह्यन्यथा प्रकृतशङ्कानिरासः । ननु सूक्ष्मसंपरायगुणस्थानवतः सूक्ष्मलोभलक्षणरागसद्भावेऽपि द्वेषाभावात् कथमेकाधारता ? इत्यत आह-'लोके' स्थूलकषायवति सामान्यजने । ततः कथं लोकोत्तरगुणस्थानवर्तिना तेन व्यभिचारः ? । एवं च कथमेकभावेऽन्याभावादीषदपि निर्दोषता पाखण्डिमण्डलाभिमतदेवानाम् ? कार्याभिव्यङ्ग्यस्थूलतरकषायकलङ्कितत्वात्तेषाम् । इति गाथार्थः ॥ १३ ॥

एवमनयोस्तुल्यविषयाधारतया साम्यं समर्थ्य तुल्यफलत्वमुपदर्शयंस्तद्वतो देवत्वाभावमाह—

**इह लोए निंदखिंसं, लहंति परलोए नरयदुक्खाइं। रागद्दोसेहिंतो, तेसु ठिओ कह णु देवो त्ति ॥१४॥**

व्याख्या-'इह लोके' अत्र जन्मनि 'निंदाखिंसं' इति तत्समक्षं गर्हणं निन्दा, लोकसमक्षं तु जात्याद्युद्घट्टनं खिंसा, ततः समाहारः । 'लभन्ते' प्राप्नुवन्ति, 'परलोके' जन्मान्तरे 'नरकदुःखानि' दुर्गतियातनाः, 'रागद्वेषाभ्यां' हेतुभूताभ्यां तद्वन्तः प्राणिन इत्यर्थः । अथैतदुभयदोषवतो देवत्वाभावमुपसंहरन्नाह-यत एवं ततः 'तयोः' रागद्वेषयोः 'स्थितः' वर्त्तमानः कथं नु देव इति पूर्ववत् । रागाद्याध्मातमानसत्वादसर्वज्ञत्वादव्यभिचारिशास्त्राप्रणेतृत्वात्तस्य नैव देवत्वम् । इति गाथार्थः ॥१४॥

अथ मोहस्य स्वरूपफले दर्शयन् रागद्वेषयोरपि तन्मूलत्वमाह—

**मोहो पुण अन्नाणं, सयलाणत्थाण कारणं तं तु । रागद्दोसावि फुडं, तप्पभवा निच्छओ एस ॥१५॥**

व्याख्या—'मोहः' असम्यक्प्रतिपत्तिः, पुनःशब्दो रागद्वेषाभ्यामस्य विशेषणार्थः। 'अज्ञानम्' इति नञ् कुत्सायां, तेन मिथ्याज्ञानमित्यर्थः। 'सकलानर्थानां' ऐहभविकादिसमस्तव्यसनानां पूर्वोपदर्शितानां 'कारणं' हेतुः 'तत्' इति अज्ञानमेव। 'तुः' अवधारणे। तदुक्तम्—"अज्ञानं खलु कष्टं, क्रोधादिभ्योऽपि सर्वपापेभ्यः। अर्थं हितमहितं वा, न वेत्ति येनावृतो लोकः ॥१॥" ननु रागद्वेषयोरेव सर्वानर्थसंपत्तिनिष्पादकता निःसीमास्ति, तत्किमस्य ताभ्यां सकाशादाधिक्यम्?। अत आह—'रागद्वेषावपि' आस्तामनर्थसार्थस्तत्संपादकावपि रागद्वेषावित्यपिशब्दार्थः। 'स्फुटं' व्यक्तमिति प्रभवनक्रियाविशेषणम्। 'तत्प्रभवौ' मोहोद्भूतौ 'निश्चयः' निर्णय एषः, नात्र संशयः। मोहस्य मूलप्रकृतित्वेन रागद्वेषयोर्लोभक्रोधपर्यायविशेषतया तदुत्तरकार्यपरिणामरूपत्वात्तत्कार्यं तत्त्वतो मोहकार्यमेव, विषाजीर्णव्यापादनवत्। इति गाथार्थः ॥१५॥

अथ मोहस्य चोदितं स्पष्टयंस्तस्यानर्थहेतुत्वक्रममाह—

**अन्नाणंधा जीवा, पाणिवहाईसु जं पयट्टंति। तत्थ य असुहं कम्मं, तत्तो नरयम्मि दुक्खाइं ॥१६॥**

व्याख्या—'अज्ञानान्धाः' मिथ्यादर्शनोपहतसद्दृष्टयः 'जीवाः' प्राणिनः 'प्राणिवधादिषु' स्थूलजीवहिंसादिषु, अनेन तन्मूलद्वेषकार्यं प्रतिपादितम्, आदिशब्दात् तन्मूलरागकार्यं मद्यमांसाङ्गनासङ्गादिपरिग्रहस्तेषु। 'यत्' यस्मात् 'प्रवर्तन्ते' उद्यच्छन्ति। 'तत्र च' तत्प्रवर्तने च सति 'अशुभं' कटुकविपाकतया सवेद्यमसातादिलक्षणमशोभनं 'कर्म' ज्ञानावरणीयाद्यष्टप्रकारमपि बध्नन्तीति शेषः। 'ततः' तस्मात् तद्वशात् कर्मणः सकाशात् 'नरके' इति दुर्गतिमात्रोपलक्षणं, तेन तिर्यग्-

मानुषत्वादिगतौ सर्वत्रापि ' दुःखानि ' दुःसहतराणि कष्टानि प्राप्नुवन्तीत्यध्याहारः । तदेवं रागादित्रयवतो देवस्यापि भवभ्रमणमेव, न तु लोकनिस्तारकत्वं, स्वयमेवास्वस्थत्वात् । इति गाथार्थः ॥ १६ ॥

ननु मोहवतो रागद्वेषाववश्यम्भाविनाविति तावन्निश्चितम्, तद्धेतुकत्वात्तयोः । मोहवत्त्वमेव तु कुतस्तस्य निश्चेयम् ? इति सदृष्टान्तं तल्लिङ्गमाह—

**सो नज्जइ अन्नाणी, जीवे मारेइ धम्मलोभेण । सागरहुत्तो गच्छइ, भणइ य वच्चामि हिमवंते ॥१७॥**

व्याख्या–' सः ' पुरुषः ' ज्ञायते ' लिङ्गतोऽवगम्यते ' अज्ञानी ' इति विपर्यस्तज्ञानवान् । तच्छब्दस्य यच्छब्देन नित्यसंबन्धाद् य इति गम्यते । लिङ्गमाह–यः ' जीवान् ' स्थूलप्राणिनोऽपि च्छागादीन् ' मारयति ' वधानुमतिभ्यां यजमानादिना व्यापादयति ' धर्मलोभेन ' स्वर्गादिसाधनश्रेयोऽभिलाषेण, ' एषां तावदित्थं प्रवर्तमानानां धर्म एव, ममाप्येवमुपदिशत एव धर्मः ' इत्यभिप्रायवानित्यर्थः । " तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेत, राजसूयेन यजेत, अग्नीषोमीयं पशुमालभेत, स्वर्गकामो यजेत " इत्यादिभिर्विधिवाक्यैः स्वर्गार्थिनस्तत्र प्रवर्तयन् मारयतीत्यर्थः । धर्मलोभेनेत्युपलक्षणम्, तेन लोकरक्षादिकारणेन, स्वयमेव वा मारयति जीवानन्धकहिरण्यकशिपुप्रभृतीनसुरान् । ततो जीववधतदुपदेशलिङ्गोपलम्भादनुमीयते ' नूनमसावज्ञानी ' इति, न ह्यविपर्यस्तमतिः प्राणिरक्षासाध्यं धर्मं तद्वधेनोपदर्शयेदिति भावः । अत्रैवानुरूपं दृष्टान्तमाह–' सागरहुत्तो ' समुद्राभिमुखं दक्षिणादिशीत्यर्थः; ' गच्छति ' याति कश्चिदज्ञः । स चान्येन पृष्टः सन् ' भणति

च' प्रतिभाषते च। च शब्दोऽसमावितप्रतिभापणसमुच्चयार्थः। किं भणति? इत्याह—'व्रजामि' गच्छाम्यहं 'हिमवति' औदीच्याचलविशेषे। यथा हि दक्षिणस्यां प्रस्थितस्य हिमवद्गमनकथनं विरुद्धं, तथैव धर्मार्थिनो जीववधोपदर्शनमिति भाव। अत्र च प्रयोगः—प्राणिवधहेतुकधर्मभाषको देवो मिथ्याज्ञानवान्, दृष्टेष्टविरोधिभाषकत्वात्, अपाचीप्रस्थितहिमवद्गमनभाषकवत्। अथवा वेदे यागहिंसाप्रतिपादकोऽसम्यग्ज्ञानी, पूर्वापरविरुद्धभाषकत्वात्, पूर्वं स्वस्य क्षत्रियाभिधानपुरस्सरं पश्चाद्ब्राह्मणत्वाभिधायकवत्। न चायमसिद्धो हेतुः, "न हिंस्यात् सर्वभूतानि" इत्यादिपूर्ववाक्यैर्यागहिंसाप्रतिपादकवाक्यानां विरुद्धत्वादिति। श्रूयते च बहुशः प्रवृत्तिः प्राणिवधाय लौकिकदेवानां शस्त्रग्रहादिषु। तदुक्तम्—"शक्रं वज्रधरं बलं हलधरं विष्णुं च चक्रायुधं, स्कन्दं शक्तिधरं श्मशाननिलयं रुद्रं त्रिशूलायुधम्। एतान् दोषभयार्दितान् गतघृणान् बालान् विचित्रायुधा-न्नानाप्राणिषु चोद्यतप्रहरणान् कस्तान्नमस्येद् बुधः?॥ १॥" इति। तथा च मोहोपहतत्वान्न देवत्वमेषामिति भावः। इति गाथार्थः ॥ १७॥

अथैतद्दोषवतो विशेषेणादेवत्वाभिधानपूर्वकं दोषत्रयाभाववतो देवत्वमुपसंहरन्नाह—

**जो मज्जमंससेवी, जीवे मारेइ कह णु सो देवो। ता एएहिं विमुक्को, देवो लिंगेहिं नायव्वो ॥१८॥**

व्याख्या–मद्यमांसे–सुरापिशिते, तदासेवी–तदुपभोक्ता, योषिदाद्युपभोगोपलक्षणं चैतत्, तेन स्त्रीभोक्ता च। 'य.' इति सामान्यनिर्देशेन पाखण्डिमण्डलाभिमतसमस्तदेवपरामर्शः। तेन कश्चिन्मद्यस्य सेवकः, अपरो मांसस्य, अन्यः सर्वस्यापीत्यर्थः।

तदुक्तम्—" रुद्रो रागवशात् स्त्रियं वहति यो हिंस्रो दयावर्जितो, विष्णुः क्रूरतरः कृतघ्नचरितः स्कन्दः स्वयं ज्ञातिहा । क्रूरार्या महिषान्तकृन्नरवसामांसास्थिकामातुरा, यानेच्छश्च विनायको जिनवरे स्वल्पोऽपि दोषोऽस्ति कः ? ॥ १ ॥" तथा जीवान् मारयतीति कथं नु स देव इति च पूर्ववद्व्याख्येयम्, भावनीयं च । अत्र च जीवभक्षणवधाभिधायिनी तेषामेवैवं श्रुतिः—" शशकः शल्लकी गोधा, कूर्मः खड्गी च पञ्चमः । पञ्च पञ्चनखा भक्ष्याः" इत्यादि । एवं च कथं तेषामेवं वैशसकर्मकारणोपदेशसमुद्यतानां देवत्वमूलनिबन्धनं कारुण्यम् ? । कारुण्याभावव्यञ्जकं सुप्रसिद्धमेवैषां प्राणिघातकत्वम् । तथाहि—" [1]पंचिंदितणुसमुत्थं, महइ सचित्तं पि मंसपेसिं जो । पत्तपडियं न दूसइ, कारुणिओ सो कहं बुद्धो ? ॥ १ ॥ निच्चं न्हाणविहाणं, जलगयअसंखजियगुरुघरट्टं । धम्मत्थमुवइसंतो, कारुणिओ होइ कह कविलो ॥ २ ॥ [3]भट्टो भग्गमरट्टो, जाओ करुणापरायणसमासु । निग्घिणनरपसुमेहं, वेयपवुत्तं पवत्तंतो ॥ ३ ॥ [4]कणभक्खअक्खपाया, पावं नरमेहहोममाईयं । रुद्दुत्तं ति कुणंता, कह करुणासायरा हुंतु ॥ ४ ॥ [5]कावालिया वि नरसिर–कवालहत्था करालभूइल्ला । हिययलुलियट्ठिमाला,

१ पञ्चेन्द्रियतनुसमुत्थां, कांक्षति सचित्तामपि मांसपेशीं यः । पात्रपतितां न दुष्यति कारुणिक स कथं बुद्धः ? ॥ २ नित्यं स्नानविधानं, जलगतासंख्यजीवगुरुघरट्टम् । धर्मार्थमुपदिशन्, कारुणिको भवति कथं कपिलः ॥ ३ भट्टो भग्नमानो, जातः करुणापरायणसभासु । निर्घृणनरपशुमेधं, वेदप्रोक्तं प्रवर्त्तयन् ॥ ४ कणभक्षाक्षपादौ, पापं नरमेधहोमादिकम् । रुद्रोक्तमिति कुर्वन्तौ, कथं करुणासागरौ भवताम् ॥ ५ कापालिका अपि नरशिरः–कपालहस्ताः करालभूतिमन्तः । हृदयलुलितास्थिमाला, दयालुकाः कथं रुद्रमताः ॥

दयालुया कह णु रुद्दमया ॥ ५ ॥ जे जोगैवड्डणट्ठ, गेय सेवति कोलमयरुइणो ॥ पयडविड व्व न ते वि हु, धम्मत्था जेण इसियमिण ॥ ६ ॥ रंडौ चंडा दिक्खिया धम्मदारा, भिक्खा भुज चम्मखड च सिज्जा । मज्ज मंस पिज्जए खज्जए वा, कोलो धम्मो कस्स नो भाइ रम्मो ॥ ७ ॥ पौंसडिमडलाभिमय–,देवयासेवियम्मि ही मूढा । इय मग्गम्मि पयट्टा, कहमपवग्ग विमग्गति ॥ ८ ॥" एतच्च माध्यस्थ्येन विचारमात्र क्रियतेऽस्माभिर्न तु क्वचिद् रागद्वेषादेः । यतः—" नास्माक सुगतः पिता न रिपवस्तीर्थ्या धन नैव तै–र्दत्त नैव तथा जिनेन न हृत किञ्चित्कणादादिभिः । किन्त्वेकान्तजगद्धितः स भगवान् वीरो यतश्चामल, वाक्य सर्वमलापहन्तृ च यतस्तद्भक्तिमन्तो वयम् ॥ १ ॥" किमित्यवश्य देवस्य रागाद्यभावो गवेष्यते ? इति चेत्, पारलौकिकानुष्ठानेषु स्वर्गापवर्गसाधनत्वे प्रत्यक्षादिप्रमाणाभावात्तद्वचनप्रामाण्येनैव प्रवृत्तेः, रागादिमतश्च तदभावात् । यदुक्तम्—" पैरलोयम्मि पमाण, वयण चिय त च विगयदोसस्स । पुरिसस्स तेण देव, वयति रागाइरहिय ति ॥१॥" तदेव रागादिमतामदेवत्व व्यवस्थित यतः–'ता' इति तस्मात् 'एतैः'

---

१ 'नया' इति प्रत्यन्तरे । २ ये योगवर्द्धनार्थ, गेय सेवन्ते कौलमतरुचिमन्त । प्रकटविटा इव न तेऽपि खलु, धर्मार्थो येन हसितमिदम् ॥ ३ 'जोगवट्टनट्ट' इति प्रत्यन्तरेषु ॥ ४ रण्डा चण्डा दीक्षिता धर्मदारा, भिक्षा भोज्य चर्मखण्ड च शय्या । मद्य मांस पीयते खाद्यते वा, कौलो धर्मः कस्य नो भाति रम्य ॥ ५ पाखण्डिमण्डलाभिमत,–देवतासेविते ही मूढा । इति मार्गे प्रवृत्ताः, कथमपवर्ग विमृगयन्ति ॥ ६ परलोके प्रमाण, वचनमेव तच्च विगतदोषस्य । पुरुषस्य तेन देव, वदन्ति रागादिरहितमिति ॥

त्रिभिरपि रागादिभिर्विशेषेणापुनर्भावितया मुक्तः–वर्जितः 'देवः' सर्वप्रकाराराध्यतमः 'लिङ्गैः' स्त्रीशस्त्रत्यागतत्त्वोपदेशा-
दिभिर्लक्षणैः 'ज्ञातव्यः' बोद्धव्यो मुमुक्षुभिरिति। तदुक्तम्—"न यः शूलं धत्ते न च युवतिमङ्के समदनां, न शक्तिं
चक्रं वा न हलमुशलाद्यायुधधरम्। विनिर्मुक्तं क्लेशैः परहितविधावुद्यतधियं, शरण्यं भूतानां तमृषिमुपजातोऽस्मि शर-
णम् ॥ १ ॥" तथा—"त्यक्तस्वार्थः परहितरतः सर्वथा सर्वरूपं, सर्वाकारं विविधमसमं यो विजानाति विश्वम्। ब्रह्मा
विष्णुर्भवतु वरदः शङ्करो वा जिनो वा, यस्याचिन्त्यं चरितमसमं भावतस्तं प्रपद्ये ॥ १ ॥" सूक्ष्मबुद्ध्या च विचार्यमाण
एवंलक्षणको जिन एव देवः प्रतिभासते। यदुक्तम्—"जिनेन्द्रो देवता तत्र, रागद्वेषविवर्जितः। हतमोहमहामल्लः, केवल-
ज्ञानदर्शनः ॥ १ ॥ सुरासुरेन्द्रसंपूज्यः, सद्भूतार्थप्रदर्शकः। कृत्स्नकर्मक्षयं कृत्वा, संप्राप्तः परमं पदम् ॥ २ ॥" तथा—
"चउतीसअइसयजुओ, अट्ठमहापाडिहेरकयसोहो। दसअट्ठदोसरहिओ, सो देवो नत्थि संदेहो ॥ १ ॥" वीतरागस्य च
तस्य भगवतस्तत्त्वोपदेशकत्वं निर्विवादम्। तदेवागमः, तदुक्तम्—"आगमो ह्याप्तवचन–माप्तं दोषक्षयाद् विदुः। वीतरागोऽ-
नृतं वाक्यं, न ब्रूयाद्धेत्वसंभवात् ॥ १ ॥ रागाद्वा द्वेषाद्वा, मोहाद्वा वाक्यमुच्यते ह्यनृतम्। यस्य तु नैते दोषा–स्तस्यानृत-
भाषणं किं स्यात्? ॥ १ ॥" तत् सिद्धमेतत्–विवादाध्यासितो वीतरागः सर्वदा स्त्रीशस्त्राद्यनासङ्गित्वान्मुक्तात्मवत्।
तथा च सति अविसंवादिवचनोऽसौ, वीतरागत्वात्, यस्तु विसंवादिवचनो नासौ वीतरागः, यथा विप्रलम्भकादिः।

१ चतुस्त्रिंशदतिशययुतः, अष्टमहाप्रातिहार्यकृतशोभः। दशाष्टदोषरहितः स देवो नास्ति संदेहः ॥ २ अन्यत्र 'कारणं'
इति दृश्यते।

रागादेरेव च सम्यग्ज्ञानं प्रति महावरणत्वात्, तस्य च जलदपटलस्येवात्यन्ताभावे भास्वन्मण्डलस्येव तस्य सार्वज्ञरूप सर्वप्रकाशकत्वमपि प्रमाणसिद्धमेवेति युक्तमस्य निर्दोषत्वात्सर्वातिशायित्वाच्चाराध्यतमत्वम् । इति गाथार्थः ॥ १८ ॥

देवस्वरूपप्रश्नानन्तरमत्यन्तधर्मस्पृहयालोर्धर्मप्रश्ने सति तदुत्तरे वक्तव्येऽपि तदुल्लङ्घ्य " समाराधितो ह्युपदेष्टा सम्यगुपदिशति " इति न्यायमभिसंधाय देवस्वरूपाभिधानानन्तरमेव तदाराधनोपायप्रश्नस्योत्तरमुक्तवान् युक्तिरत्रयाऽऽचार्यः । तत्राप्यस्य वीतरागत्वात्पूजादिनाऽऽराधनासंभवात् क आराधनोपायः ? इत्याशयवतस्तदाराधनोपायप्रश्ने प्रत्युत्तरमाह—

**तस्साराहणमेयं, तव्वयणाराहणं ति निच्छयओ । संसारवाहिहरणं, आसवदाराण पडिलोमं ॥१६॥**

व्याख्या—'तस्य' वीतरागस्य 'आराधनं' प्रसादनं 'एतत्' अनन्तरमेव वक्ष्यमाणं, तदेवाह—'निश्चयतः' निश्चयनयमाश्रित्य 'तद्वचनाराधनमिति' तदाज्ञासम्यगासेवनम्, तेन—'व्यवहारनयतोऽन्यदप्यस्तु अतात्त्विकत्वात्, न तु तत्परमार्थतः आराधनम्' इत्येतत् इति शब्देनाराधनोपायप्रकारोपदर्शकेन व्यनक्ति । अयमभिप्रायः—यद्यप्यस्य राजादेरिव मनःप्रसादनलक्षणमाराधनं न संभवति वीतरागत्वात्, तथाप्येतद्वचनाराधकानां राजादिप्रसादनमिव प्रसादकार्यमहापदलाभोपलम्भात् प्रसादनोपचारः । प्रसादनं च द्वेधा, व्यवहारतो निश्चयतश्च । पुनरेतद् द्वयमपि द्रव्यभावार्चनभेदाद् द्विधा । तत्र यत् त्रिसन्ध्यं विशिष्टभावविकलैर्लौकिकैरिव स्नात्रबलिमहाप्रेक्षणकादिभिराराधनं तद् व्यवहारतो द्रव्यार्चनम्, भावार्चनाऽहेतुत्वे-

१

नानर्थकत्वात्। यत्तु विधिना जिनभवनविधापनादिपूर्वकं त्रिसन्ध्यमेव भावसारमभ्यर्चनं तन्निश्चयतो द्रव्यार्चनम्, भावार्चन-
हेतुत्वात्। तदुक्तम्—"जिणभवणबिंबठावण-जत्तापूयाइ सुत्तओ विहिणा। दव्वत्थउ त्ति नेयं, भावत्थयकारणत्तेणं ॥१॥"
द्रव्यार्चनादिलक्षणतात्त्विकमोक्षमार्गद्वयनिरूपणेऽस्यैव परिसंख्यानात्। एवं विशिष्टचारित्रभावविकलस्य लिङ्गिनोऽनुष्ठानेन
यदाराधनं तद्व्यवहारतो भावार्चनम्, विवाञ्छितफलासाधकत्वात्। यच्च भावगतेरविकलानिरवद्यानुष्ठानेन तदाराधनं तन्निश्च-
यतो भावार्चनम्।—"दव्वत्थओ य भाव-त्थओ य दव्वत्थओ बहुगुणु त्ति। बुद्धि सिया अनिउणजण-वयणमिणं छज्जी-
वहियं जिणा विंति ॥ १ ॥" इति॥ तीर्थकृद्वचनस्यैवमेव सम्यगाराधनात्, निश्चयद्रव्यार्चनस्याप्येतदशक्तस्यैवोपदेशात्,
अवश्याभिमतफलप्रदत्वाच्च, शेषस्य तु व्यवहारार्चनस्य तदाराधनानुपायत्वात्। तदुक्तम्—"तुममच्छीहिं न दीससि,
नाराहिज्जसि पभूयपूयाहिं। किंतु गुरुभत्तिरागे-ण वयणपरिपालणेणं च ॥ १ ॥" अत्र च वचनाराधनोपायसाध्यत्वेऽपि
जिनाराधनस्य साध्यसाधनयोरभेदोपचारात् तद्वचनाराधनमेव तदाराधनमुक्तम्। तत् स्थितमेतत्—तद्वचनाराधनमेव तदा-
राधनमिति। अस्य फलप्रदत्वमेवाविर्भावयन्नाह—'संसारव्याधिहरणं' नानाशारीरमानसबाधाधायकत्वात् संसार एव

१ जिनभवनबिम्बस्थापन-यात्रापूजादिः सूत्रतो विधिना। द्रव्यस्तव इति ज्ञेयं, भावस्तवकारणत्वेन ॥ २ द्रव्यस्तवश्च भाव-
स्तवश्च द्रव्यस्तवो बहुगुण इति। बुद्धिः स्याद् अनिपुणजन-वचनमिदं षड्जीवहितं जिना ब्रुवते ॥ ३ त्वमक्षिभ्यां न दृश्यसे,
नाराध्यसे प्रभूतपूजाभिः। किन्तु गुरुभक्तिरागेण, वचनपरिपालनेन च ॥

व्याधिस्तस्य हरण–ध्वसकम्, मुक्तिहेतुत्वात्, इतरस्यैव सामर्थ्याभावात् । एतदपि कुत ? इत्याह–' आश्रवद्वाराणां ' नूतनकर्मोपादानस्थानानां ' प्रतिलोम ' इति प्रतिकूल, यतः सर्वाश्रवद्वारनिरोधरूपस्य भवध्वसकत्वभावात् । इति गाथार्थः ॥ १६ ॥

एतदेव दृष्टान्तद्वारेण गाथाद्वयेन स्पष्टयन्नाह—

जह इह सुविज्जवयणा, अपत्थपरिवज्जणेण पत्थासी। पावइ दढदेहत्त, निरुजो सइ सुक्खआवासं ॥२०॥

इय तव्वयणाओ वि हु, अन्हयपरिवज्जणा सुकडसेवी। निस्सेसकम्ममुक्को, पावइ मुक्खं सयासुक्खं॥२१॥

व्याख्या—यथेति दृष्टान्तार्थः। इहेति लोके। 'यथा' येन प्रकारेण 'सुवैद्यवचनात्' इति, वैद्यकशास्त्राभिज्ञ एकान्तकारुणिको निराशसश्च शोभनो भिषक् सुवैद्यस्तस्य वचनाद्—एकान्तहिताद्वाक्यात्कश्चिद्रोगी ' अपथ्यपरिवर्जनेन ' अहिताशनादित्यागेन ' पथ्याशी ' हितमितभोजी ' प्राप्नोति ' आसादयति ' नीरुक् ' निरामयः सन् ' दृढदेहत्व ' सर्वथा रोगापगमात्पुष्टाङ्गत्व ' सदा ' सर्वकाल ' सौख्यावास ' व्याधिबाधाऽभावादत्यन्तानन्दास्पदम् ॥ २० ॥ ' इति ' एव ' तद्वचनादपि ' जिनोपदेशादपि ' हु ' पूरणे, ' अन्हय ' इति आश्रवद्वाराणि समयभाषयोच्यन्ते, तेषामपथ्यानामिव ' परिवर्जनात् '–सर्वथा त्यागात्, ' सुकृतसेवी ' पथ्यस्येव शुद्धचारित्ररूपसदनुष्ठानस्यासेवनशीलः ' निःशेषकर्ममुक्तः ' रोगैरिव समस्तज्ञानावरणादिभिस्त्यक्त ' प्राप्नोति ' लभते ' मोक्ष ' नित्यज्ञानानन्दात्मकशाश्वतजीवस्वभावात्मक

शिवम्, अत एवाह–' सदासौख्यं ' नित्यानन्दम् । अयमभिसन्धिः–यथा निराशंसवैद्यस्य वचनविधानमेवाराधनम्, तदेव च रोगिणां रोगाभावाऽऽपादकम्, एवं वीतरागस्यापि वचनविधानमेवाराधनम्, तदेव च प्राणिनां शिवदम् । इति गाथा- द्वयार्थः ॥ २० ॥ २१ ॥

एवमुक्तं तदाराधनप्रश्नस्योत्तरम् । अथ धर्मप्रश्नस्याह—

**तव्वयणुत्तासेवण–रूवो धम्मो उ सो दुहा भणिओ । जइधम्मो खंताई, अगारिधम्मो इमो होइ॥२२॥**

व्याख्या—'तद्वचनोक्तासेवनरूपः' वीतरागप्रवचनोपदिष्टानुष्ठानविधानलक्षणः 'धर्मः' प्राग्निरूपितशब्दार्थः। स चायम्–
" दुर्गतिप्रसृतान् जन्तून्, यस्माद्धारयते ततः । धत्ते चैतान् शुभे स्थाने, तस्माद्धर्म इति स्मृतः ॥ १ ॥ " अनेन च अवी-
तरागोपदिष्टागमोक्तानुष्ठानस्याधर्मत्वमर्थादुक्तं भवति, अज्ञान्युक्तत्वेन तस्य सम्यग्जीवदयाप्रधानत्वाभावात् । ' तुः '
पुनरर्थः, स च विशेषणार्थः । तस्य स्वरूपमभिधाय संबन्धिभेदाद्भेदमाह–' सः ' धर्मः ' द्विधा ' द्विप्रकारः ' भणितः '
प्रतिपादितो जिनैरित्यर्थाद्गम्यते । स च सर्वोऽपि वक्ष्यमाणलक्षणसम्यक्त्वसंगत एव तात्त्विकः, अन्यस्य त्वतिदुष्करस्यापि
तामलिप्रभृतिविहितस्येव नामधर्मत्वात् । द्वैविध्यमेवाह ' यतिधर्मः ' साध्वाचारः क्षान्त्यादिदशप्रकारः । तदुक्तम्—" खंती
य मद्दवज्जव, मुत्ती तवसंजमे य बोद्धव्वे । सच्चं सोयं आकिं–चणं च बंभं च जइधम्मो ॥ १ ॥ " ' अगारिधर्मः ' गृहस्थ-
सदाचारः पुनरयं वक्ष्यमाणभेदो भवति । इति गाथार्थः ॥ २२ ॥

तमेवाह—

**अरहतुवइट्ठाण, तत्ताण रुईह होइ सम्मत्तं । तज्जुत्तस्स दुवालस, वयाइं पयाइ पयस्स ॥ २३ ॥**

व्याख्या—'अर्हदुपदिष्टेषु' भगवत्प्रणीतेषु 'तत्त्वेषु' जीवादिषु पदार्थेषु, सप्तम्यर्थेऽत्र षष्ठी, 'रुचिः' श्रद्धा–एवमेवैतदिति प्रत्ययः, 'इह' प्रवचने भवति सैव च 'सम्यक्त्व' सम्यग्दर्शनं मोक्षाविकलबीजभूतम् । अनेन क परिणामविशेषरूपो धर्म ? इत्यस्योत्तरमुक्तम् । उपलक्षणाच्चास्य देशविरतिसर्वविरतिपरिणामविशेषयोरप्येवमेव धर्मत्व द्रष्टव्यम् । ततश्च 'तद्युक्तस्य' सम्यक्त्वसहितस्य देशविरतिपरिणामविशेषवतश्च 'द्वादश' द्वादशसङ्ख्यानि 'व्रतानि' नियमाः । 'एतानि' अनन्तरमेव वक्ष्यमाणानि 'एतस्य' श्रावकस्य धर्म इति शेषः । अनेन च तत्पूर्वकमनुष्ठानमित्यस्योत्तरमभिहितम् । सम्यक्त्वसाहित्योपवर्णन त्वत्र श्रावकधर्मस्येह प्रक्रान्तत्वात् । वस्तुतस्तु यतिधर्मस्याप्येतत्साहित्य द्रष्टव्यमेव, अन्यथा तस्यापि नामधर्मत्वापत्तेः । इति गाथार्थः ॥ २३ ॥

अथास्यैव श्रावकधर्मस्य मूलगुणोत्तरगुणभेदरूपतया द्वैविध्यमाह—

**जियघायमुसादत्ता,–मेहुन्नपरिग्गहेसु देसेण । विरई मूलगुणा सि, उत्तरगुण हुंति सत्तविहा ॥ २४ ॥**

व्याख्या—'जीवघात' प्राणिध्वंसः, 'मृषा' इत्यलीकम्, 'अदत्त' इति परावितीर्णं वस्तु । अथवा मृषावादादत्तादानलक्षणपदसमूहे मृषादत्तादित्येकदेशोपचारः । ततो जीवघातश्चेत्यादिसमाहारः, तस्माद् देशेन विरतिरिति सबन्धः । तथा

'मैथुनपरिग्रहयोः' निधुवनद्रव्यसंग्रहयोर्विषये च विरतिः । अथवा जीवघातादिषु परिग्रहान्तेषु पञ्चस्वपि द्वन्द्वः । अदत्ता इत्यत्राऽऽकारः प्राकृतत्वात् । 'देशेन' सर्वविरत्यवयवरूपतया, न तु यतिवत्सर्वथेत्यर्थः । तेन संकल्पजाद् द्वीन्द्रियादिवधात् कन्यादिविषयादलीकात् चौर्यापादकाददत्तात् परकलत्रविषयान्मैथुनाद् अपरिमितादर्थसंग्रहाद् निवृत्तिस्त्रिभिरपि करणैः करणकारणाभ्यां प्रत्याख्यानम् । अत एवाणुव्रतसंज्ञाख्यातिरेषाम्, महाव्रतापेक्षयाऽल्पीयस्त्वात् । एताश्च 'विरतयः' श्रावकस्य गुणा इतरजनेभ्यो व्यावर्तका धर्माः । ततश्चैताः पञ्चापि श्रावकधर्मवृक्षस्य मूलानीवेति मूलगुणाः 'एषाम्' इति श्रावकाणाम् । तथा उत्तराः—ऊर्ध्वकालभाविनो विशिष्टतरकर्मक्षयोपशमसाध्यत्वेन प्रधाना वा गुणा उत्तरगुणाः, 'भवन्ति' जायन्ते 'सप्तविधाः' सप्तप्रकाराः । तत्र चादौ दिग्गमनभोगोपभोगानर्थदण्डविरतयस्तिस्रोऽपि गुणव्रताख्याः, अणुव्रतानामेव गुणायोपकाराय व्रतानि नियमा इति कृत्वा; परिमितशाखादिवत् । विभक्तिलोपोऽत्र प्राकृतत्वात् । 'भवन्ति' जायन्ते 'सप्तविधाः' सप्तप्रकाराः । तत्र चादौ दिग्गमनभोगोपभोगानर्थदण्डविरतयस्तिस्रोऽपि गुणव्रताख्याः, अणुव्रतानामेव गुणायोपकाराय व्रतानि नियमा इति कृत्वा; परिमितदिगादेः परतः प्राणातिपातादीनां सर्वथा निवर्तनहेतुत्वात् । तथा सामायिकदेशावकाशिकपौषधोपवासातिथिसंविभागाश्चत्वारोऽपि शिक्षाव्रतानि, पुनः पुनः करणादेषां शिक्षाऽभ्यासस्तत्प्रधानानि व्रतानीति कृत्वा । एवमेते सप्तोत्तरगुणाः । एषां च मूलगुणैर्मेलके द्वादश व्रतानि । तदुक्तम्—" पंचेव अणुवयाइं, गुणव्वयाइं च हुंति तिन्नेव । सिक्खावयाइं चउरो, सावगधम्मो दुवालसहा ॥ १ ॥ " तदयमेवं द्वादशविधः श्रावकधर्मः । अयं च द्वाविंशतिभेदभिन्नोऽपि धर्मो मुक्तिहेतुजिनाराधनोपायः, तद्वचनाराधनस्यैव तदाराधनोपायत्वात्, अस्य च तदनुष्ठानरूपत्वात् । ततः सिद्धमेतत्—" धर्मादेव मोक्षः " । इति गाथार्थः ॥ २४ ॥

इदानीं व्रतपरिकर्मणः प्रथम भेदमुपसंहरन् द्वितीयतृतीयभेदावाह—

**इय सुणिऊणं जाणइ, पुणरुत्त पुच्छिउ असंदिद्धं । पच्छा इच्छइ काउं, पुव्विं परिकम्मणं कुणइ॥२५॥**

व्याख्या—'इति' एवमगुरुदेवादिव्यवच्छेदेन गुरुदेवतदाराधनधर्मादिक तदनुषङ्गेणैव मिथ्यात्वतद्धेत्वनायतनादितत्परिहाररूप शीलवत्त्वगुणवत्त्वस्थानादिक च यावत् सर्वं च ज्ञातव्यम् । 'श्रुत्वा' आकर्ण्य तदेव 'जानाति' अवगच्छति, श्रवणकार्यत्वाद् ज्ञानस्य तदनन्तरमभिधानम् । कथमय जानाति ? इत्याह–'पुनरुक्त' पुनः पुनः 'पृष्ट्वा' गुरुमनुयुज्य 'असंदिग्ध' निःसंशय, शृण्वतोऽपि यदा यदा संशय उत्पद्यते तदा तदा प्रश्नेन संशयमनूद्य सम्यगवगच्छतीति द्वितीयो भेदः । ततोऽपि "ज्ञानस्य फल विरति" इति तृतीयभेदमवतारयति–'पश्चात्' इति सम्यग्ज्ञानानन्तरं मुमुक्षुः संवेगातिशयात्तमेव 'इच्छति' अभिलषति 'कर्तुं' विधातु संपूर्णमपि, तेन 'पूर्वं' प्रथम 'परिकर्म' निरतिचारद्वादशव्रतपरिपालनरूपपूर्वसेवालक्षण 'करोति' विदधाति । अथवा भावतस्तन्निष्ठोऽपि निबिडतरचारित्रावारककर्मोदयात्तत्र स्वस्यासामर्थ्यं निश्चित्य देशविरतावपि पवर्तमानः पूर्वं श्रवणादिकमेव परिकर्म करोति । इति गाथार्थः ॥ २५ ॥

अथ गृहीतपरिपालनरूप चतुर्थ भेदमभिदधानो व्रतपरिकर्मस्थानकमुपसंहरन्नाह—

**पालेइ जहासुद्धं, अइयारविवज्जिय जहासत्तिं । इय चउभेयं भणियं, पढमं ठाणं गिहत्थाणं ॥२६॥**

व्याख्या—'पालयति' आसेवते श्रावकधर्ममेव 'यथाशुद्ध' सर्वथा निर्दोषम् । एतदेवाह–'निरतिचार' निरपवादम् ।

अतीचारा ह्यशुद्धिहेतवस्तदभावाच्छुद्धमिति भावः। अतीचाराश्च सम्यक्त्वे शङ्कादयो व्रतेषु बन्धादयः पञ्च पञ्च सद्गुरुवक्त्राम्बु-
जादवधार्य परिहार्याः। 'यथाशक्ति' इति स्वसामर्थ्यानुरूपं, न तु यतिवत् त्रिविधं त्रिविधेनेति, शक्तिश्च चारित्रावारकवी-
र्यान्तरायादिकर्मक्षयोपशमवैचित्र्याद्विचित्रा। तत एव च करणकारणाभ्यां मनोवाक्कायैश्च श्रावकाणां विरतेरपि वैचित्र्यो-
पपत्तिः। तदुक्तम्—"दुविह तिविहेण पढमो, दुविहं दुविहेण बीयओ होइ। दुविहं एगविहेणं, एगविहं चेव तिविहेणं
॥ १ ॥ एगविहं दुविहेणं, एगेगविहेणं छट्ठओ होइ त्ति।" एवं तावत्प्रथमे व्रते षड् भङ्गाः। एवं शेषेष्वप्येकादशसु षड्भेद-
भावे द्वितीयादिव्रतभेदैश्च षड्भिरपि प्रत्येकं योजने द्विकादिसंयोगैश्च परिगणने "तेरस कोडिसयाइं, चुलसीइ जुयाइं बारस-
य लक्खा। सत्तासीइ सहस्सा, दुन्नि सया चेव सड्ढाणं ॥ १ ॥" इति। श्राद्धबाहुल्यं तद्विरतिबाहुल्यात्, तच्च शक्तिवैचि-
त्र्यादिति यथाशक्तीत्युक्तम्। केवलं चारित्राकाङ्क्षिणा विशिष्टोत्तरोत्तरदेशविरतौ यत्नवता भाव्यम्, तथैव तत्परिकर्मत्वो-
पपत्तेः। अपरिकर्मितात्मनो हि योधवन्न दुर्धरपरपराजयोत्साहकल्पश्चारित्राभ्युपगमसामर्थ्यातिशयः स्यात्। 'इति' एव-
मुक्तप्रकारेण 'चतुर्भेदं' श्रवणज्ञानेच्छापरिपालनलक्षणं चतुष्प्रकारं 'भणितं' प्रतिपादितमिति प्रकरणकार आह—
'प्रथमं' आद्यं व्रतपरिकर्मसंज्ञकं 'स्थानं' श्रावकाचारविशेषलक्षणं 'गृहस्थानां' सम्यग्दर्शनदेशविरतिभाजामगारिणां
श्रावकाणाम्। इति गाथार्थः ॥ २६ ॥

यत्संसारमहापयोनिधितटप्रस्थास्नुभिः प्राप्यते, यच्चासेवितमादरेण दलयत्याशु व्रतेन्द्रावृतिम्।

सर्वस्थानशिरोमणिस्त्रिभुवने यद्दुर्लभं सल्लभै,—स्तद्दीक्षापरिकर्म शर्मशतद सपद्यते कस्यचित् ॥१॥

॥ इति युगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचितायां षट्स्थानकविवृतौ व्रतपरिकर्मप्रथमस्थानकविवरणं समाप्तम् ॥



एवमुक्त व्रतपरिकर्मनामक प्रथम स्थानकम् । तस्यापि निरतिचारतया सम्यगासेवन शीलवत एव समवतीति तदनन्तर तस्यैवाधकारणभूत शीलवत्त्व प्रतिपिपादयिषुः पूर्वं तावत्तद्भेदसख्यां तदाद्यभेद तस्यापि विषयस्वरूपं चाह—

सीलत्तं पुण छद्धा, निच्चं आययणसेवणा पढमं ॥ आययणं पुण साहू, पञ्चविहायारसपन्नं ॥१॥

व्याख्या—' शीलवत्त्व ' प्रागुपदर्शितार्थं ' पुनः' विशेषेण 'षोढा' षट्प्रकारम् । तदुक्तम्—"आययण १ सयलखेड्ड-परिहरण २ मेवमनिमित्त । परघरपवेसच्चाओ ३ । विक्कियवयणस्स परिहारो ४ ॥ १ ॥ विक्कियवेसविवज्जण ५ मदुराराहत्त ६ भवेच्छट्ठ ॥ आययणसेवण तत्थ होइऽणाययणचाएण ॥ २ ॥ " ' नित्य ' सर्वदा ' आयतनसेवन ' सर्वादरेण तत्पर्युपासनलक्षण ' प्रथम ' आद्य शीलवत्त्व षट्सु भेदेषु वक्ष्यमाणानायतनससर्गतद्भावनयोः प्रतिजन्माभ्यस्तत्वान्न कदाचित्केनायतनसेवनमात्रेण निरोध' कर्तुं शक्यस्तस्याल्पीयस्त्वात् । किन्तु नैरन्तर्याद् आयतनसेवनेनैवेत्युपदर्शनार्थमिह नित्यग्रहणमिति । सिद्धान्ते हि लोकोत्तरिकमायतन द्रव्यभावभेदाद् द्विविधमुक्तम्, तयोरत्र भावायतनमाह—'आयतन पुनः' ज्ञाना-

दिगुणलाभोदयस्थानं पुनः ' साधवः ' ज्ञानादिभिः पञ्चभिराचारैर्मोक्षं साधयन्ति ये ते सुविहिताः । एतदेवाह—' पञ्चवि-
धाचारसंपन्नाः ' ज्ञानदर्शनचारित्रतपोवीर्यरूपपञ्चप्रकारानुष्ठानविशेषयुक्ताः । ते हि दर्शनपर्युपासनादिना ज्ञानादिलाभं
तन्वन्ति । भव्यानामिति भवन्ति भावायतनम् । उपलक्षणं चैतत्, तेन सिद्धान्ताभिहितसमस्तविधिप्रधानं विधिचैत्यमप्या-
यतनं, तस्यापि तथैव ज्ञानादिवृद्धिहेतुत्वात् । तदुक्तम्—" दव्वम्मि जिणहराइं, भावम्मि उ होइ तिविहं तु ॥ " त्रिविध-
मिति ज्ञानादित्रयरूपं तद्युक्तसाध्वादिलक्षणमित्यर्थः । तत्सेवनं च श्रावकाणां महाफलम् । यदुक्तम्—" आययणसेविणो
सावयस्स, संवेगपमुहगुणनिवहो । वड्ढइ जहा सुखित्तम्मि, रोविओ वल्लिसंताणो ॥ १ ॥ " आस्तां तावद्यत्स्वयं ते महा-
त्मान आयतनम् । यत्रैते पवित्राचाराः परिवसन्ति तदपि तत्संसर्गपवित्रितत्वादायतनम् । यदुक्तम्—" जत्थ साहम्मिया
बहवे, सीलवन्ता बहुस्सुया ॥ चरित्तायारसंपन्ना, आययणं तं वियाणाहि ॥ १ ॥ " तदेतत्सर्वमायतनं श्रावकाणां सेव-
नयोग्यम् । इति गाथार्थः ॥ १ ॥

अथायतनसेवाया अनायतनपरिवर्जनमन्तरेण कर्तुमशक्यत्वात्तत्प्रसंगादनायतनवर्जनं तावद्गाथार्धेनाह—

वज्जेइ अणाययणं, वेसित्थि दुगुंछिए कुतित्थी य ॥

व्याख्या—'वर्जयति' परिहरति श्रावकः 'अनायतनं' पूर्वोक्तायतनाद्विपरीतं ज्ञानादिहानिहेतुत्वात् । किं तत् ? इत्याह—
' वेश्यास्त्री ' पण्याङ्गना, ' जुगुप्सिता ' लोकलोकोत्तरनिन्दिता व्याधवागुरिककल्पपालादयः । ' कुतीर्थिकाः ' अन्यद-

र्शनिनः शाक्यादयः । लौकिकभावानायतनमेतत् । अस्याप्युपलक्षणत्वाल्लौकिकद्रव्यानायतनलोकोत्तरिकद्रव्यभावानायतनानामपि परिहारो द्रष्टव्यः । तत्र हरभवनादि लौकिक द्रव्यानायतनम् । तदुक्तम्—" दव्वे रुद्दाइहरा " इत्यादि । असदाचारप्ररूपणकरणप्रवणास्तु लिङ्गिनो लोकोत्तरिक भावानायतनम् । तदुक्तम्—" अह लोगुत्तरिय सुणा, अणाययण भावओ मुणेयव्व ॥ जे सजमजोगाण, करिन्ति हाणिं समत्थावि ॥ १ ॥ " यत्र चैते जिनप्रवचनप्रतिपन्थिनो निवसन्ति तद्वेश्यादि सदनवत्तत्ससर्गदूषितत्वात्स्थानमप्युपाधिभेदादनायतनम् । यदुक्तम्—" जत्थ साहम्मिया वहवे, भिन्नचित्ता अणारिया ॥ लिङ्गवेसपडिच्छन्ना, अणाययण त वियाणाहि ॥ १ ॥ " अन्यतीर्थिकपरिगृहीतानां जिनबिम्बानामप्यवन्द्यत्वाद्यभिधानात्तेषामपि लोकोत्तरिकद्रव्यानायतनत्वमेव द्रष्टव्यम् । तत्र तदाराधनस्यापि सम्यक्त्वादिभ्रंशहेतुत्वात् । एवमेव चावन्द्यत्वाद्यभिधानमुपपद्यते, न खलु श्रुतकेवलिनोऽपि महात्मानो गुरुतरदोषानुपलम्भे पारमेश्वरप्रतिमानामवन्द्यत्वमेवमेवाभिदधतीत्यलमतिप्रसगेन । तद्विशेषविचारस्तु कल्पनिशीथादिभ्यो विस्तरतोऽवसेयः । सर्वत्र चात्रासदाचारदर्शनादिघ्नसहेतुत्वेनानायतनत्व स्पष्टमेवेति । अत्र च सूत्रे भावायतनानायतनग्रहण तयोर्द्रागेव विशिष्टगुणदोषहेतुत्वख्यापनार्थं, नेतरप्रतिषेधार्थं, भावायतनादिवदितरेषामपि क्रमेण गुणदोषातिशयोत्पादकत्वस्य साम्यात् । तथा च सुश्रावकेण ज्ञानादिशुद्धिमभिवाञ्छताऽनायतनससर्गः सर्वथा परिहर्तव्यः । तदुक्तम्—" एवमिहमणाययण, सुट्ठु वि धम्मट्ठियस्स सङ्कस्स ॥ होइ गुणहाणिहेऊ, ता एय वज्जणिज्जन्ति ॥ १ ॥ "

" तदेवमायतनसेवनलक्षणः शीलवत्त्वप्रथमभेदः सप्रसंगः प्रतिपादितः, अथ प्रासंगिकानायतनविशेषपोषकत्वात् क्रीडानां तत्परिवर्जनं द्वितीयं गाथार्धेनाह—

**बीयं पुण ठाणमिणं, किड्डापरिवज्जणं कुणइ ॥ २ ॥**

व्याख्या—द्वितीयं पुनः स्थानं सदाचारविशेषः शीलवत्त्वे ' इदं ' एतत्, यत्किम् ? इत्याह—' क्रीडापरिवर्जनं ' द्यूतादेर्विनोदक्रियायाः परिहारं ' करोति ' विधत्ते श्रावक इति स्थानतद्भेदयोरभेदोपचाराद् द्वितीयस्थानमित्युक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् । इति गाथार्थः ॥ २ ॥

अथ वर्जनीयक्रीडा एवाह—

**चउरंगसारिपट्टिय—वेहाईलावगाइजुद्धाई ॥ पन्हुत्तरजमगाई, छलियाई वज्जए निच्चं ॥ ३ ॥**

व्याख्या—राजहस्त्यश्वपदात्यादिचतुरङ्गकल्पनया द्यूतं चतुरङ्गं, शारिकाभिः शारैः क्रीडनं शारिद्यूतं, परिवेष्टितचर्मदीर्घपट्टिकाच्छिद्रभेदेन द्यूतं पट्टिकावेधद्यूतं, आदिशब्दादान्धिकनालचक्रादिसमस्तद्यूतग्रहः, वर्जयतीति क्रियायोगः सर्वत्र । अत्र च द्रव्यनाशहस्तादिच्छेदादयो दोषा ऐहिका अपि सुप्रसिद्धा एव । तथा लावकास्तित्तिरविशेषाः । आदिशब्दात् कुक्कुटकुक्कुरमेषमल्लादिपरिग्रहस्तेषां युद्धमन्योन्यप्रहारादिना कलहविधापनम् । आदिशब्दात्तत्कुतूहलदर्शनादिग्रहः । अत्र योषने तेषामेवान्योन्यद्वेषवधबाधोत्पादादयः, दर्शने त्वसदाचारानुमोदनप्रशंसादयो दोषाः । एवं मिथ्यादृष्टिरथप्रेक्षणकनाटककुतूहलदर्शनादिष्वपि

भाव्यम् । तथा प्रश्ने प्रच्छके सत्युत्तर प्रतिवचन प्रश्नोत्तर, तत्प्रधान काव्यमपि प्रश्नोत्तरम् । तच्च व्यस्तसमस्तचलद्बिन्दु-वर्धमानाचरशृङ्खलामञ्जरीपद्माद्यनेकप्रकार क्रीडाकाव्यविशेषम् । यथा—" का प्रार्थ्यते विश्वजनेन सादर, का वा विजेया यत चक्रिणामपि ॥ कीदृग् नृपः स्यान्न पराभवास्पदं, भात्यम्बरे वन्दनमालिकेव ॥ १ ॥" कासारसावली ॥ " को चक्क-तुम्बलग्गो । गोरीदेहद्धसगओ को वा ॥ केलीए को दलिजइ । तरुणीण वियड्ढ तरुणेहिं ॥ १॥" आहारो लघुमञ्जरी सना थजातिः ॥" गीत शसन्ति कीदृक् किमिह तनुभृतां दुःखद रागियुग्म । कीदृक् क वा जघानामरपतिरभजद् द्यूतदोषः कमुच्चैः ॥ अर्थ: किं क च सभ्याः सदसि विवदिषु वारयन्ति स्म गावः । प्राय: किं वा चरन्ति प्रसृमरतुहिन वासर कीदृगाहुः ॥ १॥" विपरीत पद्य कमलवनदवानलम् ॥ "पुच्छइ लच्छी दईओ । अणतरत्थे किमव्वय होइ ॥ सजोइयक्खरेसु । को उच्चारिज्जए पच्छा ॥ १ ॥ " अहरो वर्धमानाचरजातिभेदः । एव भिन्नार्थतुल्यश्रुतिपदावर्तन यमक तदपि पादतदर्धाद्यावृत्त्या नाना भेदम् । यथा—" रमणो रमणो रमणो । जाओ जूयारियाण असईण ॥ सरण सरणं सरण । कह तस्स वयामि दिव्व हया । १ ॥ "आदिशब्दात्प्रच्छन्नप्रकटार्थप्रहेलिकादिग्रहः । " छिद्दन्नेसणनिउणो । वसणासगी वि लोहवतो वि ॥ सगु-णेसु पढमरेह । को लहइ जणम्मि हीणोवि ॥ १ ॥ " सूईउ प्रच्छन्नार्था । एव प्रकटार्थोऽपि परेणान्यार्थत्वेनाभिहित-स्य वाक्यस्यान्यार्थतया कल्पन छलित छलवचनमित्यर्थः । आदिशब्दात्तद्भेदग्रह । यथा—" तुह वयण पिच्छन्ती । अम्ह रुइरपि किंपि न हु वेए । मुद्धे सहो सुम्मइ । कह पइ दिट्ठो सुदिट्ठीए ॥ १ ॥ " ' वर्जयति ' परिहरति ' नित्य ' सर्वदा, सकृदप्येतत्क्रीडाप्रसगे विटादिवत् कुशीलत्वापत्त्या सुश्रावकत्वव्याघातात् । तदुक्तम्—"किड्डाए वट्टन्तो । होइ पमत्तो

य पावए सो य ॥ अंगीकयगुणहाणिं ॥ तेसिं न वाणं अलाभं च ॥ १ ॥ एवं च असुहकम्मं । बन्धइ गर्द्धं च नेइ परिपोसं । तेण य भवकन्तारे । दुहतरुफारे चिरं भमइ ॥ २ ॥ " क्रीडार्थस्य यमकादेर्निषेधेन च देवस्तवाद्यर्थस्य तस्यादुष्टत्वमेवेत्युक्तं भवति । ततः संविग्नेन सुश्रावकत्वार्थिना सर्वा अपि क्रीडास्त्याज्याः । इति गाथार्थः ॥ ३ ॥

अथ शीलभ्रंशहेतुत्वेनानायतनविशेषत्वात्परगृहप्रवेशस्य तद्वर्जनायाह—

**तईयं उस्सग्गेणं, परघरगमणं विवज्जए एसो । सुन्नेगित्थीसहियं, विसेसओ दोससब्भावा ॥४॥**

व्याख्या—तृतीयं स्थानं शीलवत्त्वे एतत् । यत् 'उत्सर्गेण' सामान्येन तात्त्विनिर्निमित्तं 'परगृहगमनं' अन्यसदनप्रवेशं विविधमनेकैः प्रकारैः कार्यान्तरव्यासंगविक्षेपादिभिर्वर्जयति परिहरति 'एषः' सुश्रावकः, तेन सुसहायस्य तत्र ज्ञातसपरिकरतद्गृहपतिसद्भावस्य चात्यन्तिकप्रयोजनेन गमनेऽपि न दोषः। किञ्चित् शून्यं तद्गृहपत्यादिरहितत्वात्, अपरमेकस्त्रीसहितं तदन्याङ्गनाऽभावात्, ततः शून्यं चैकस्त्रीसहितं चेति द्वन्द्वः । ईदृशं गृहं 'विशेषतः' अतिशयेन प्रवेशाय वर्जयतीति योगः । कुतः ? इत्याह–दोषा यथाक्रमं परद्रव्यपराङ्गनाऽभिलापादयोऽपराधास्तेषां सद्भावः कर्मदोषादुद्भवस्तस्मात् । तथा चोक्तम्—" तत्थित्थि दट्ठूणं । खुब्भिज्ज सयं व सा व खुब्भिज्जा ॥ लुब्भेज्ज परधणे वा । उभयम्मि जणो व संकिज्जा ॥१॥ एवं वयनासो से । अयसो बन्धो च होइ धणनासो ॥ हुज्जा च पाणनासो । आयासो वा नियजणस्स ॥ २ ॥ " ततः परगृहप्रवेशं वर्जयति । इति गाथार्थः ॥ ४ ॥

अत्रैव विशेषान्तरमाह—

**मयणाउरदिट्ठीए, परजुवइनिरिक्खण विवज्जेइ । परिहासकह वज्जइ, एगो एगित्थिए सद्धिं ॥५॥**

व्याख्या—मदनातुरदृष्ट्या कामविह्वललोचनेन 'परयुवतिनिरीक्षणं' अन्यस्त्रीदर्शनं 'विशेषेण' अतिशयेन 'वर्जयति' परिहरति, तथा तदवलोकनस्यासदाचारमहाराजप्रधानदूतायमानत्वात् । 'परिहासकथां' च सस्मितनर्मालापरूपाम् 'एकः' एकाकी सन् एकयाऽसहाययैव स्त्रिया योषिता सह वर्जयति । इह च स्त्रीसामान्यमात्रोपादानाद्भगिन्यादिभिरपि सहैकान्तवार्तां न करोति, लोकाशङ्कोत्पादकत्वात् मदनोन्मादस्य दुर्वारत्वाच्च । तदुक्तम्—"मात्रा स्वस्रा दुहित्रा वा । न विविक्तासनो भवेत् ॥ बलवानिन्द्रियग्राम । पण्डितोऽप्यत्र मुह्यति ॥ १ ॥" यदा चैव परस्त्रियो निरीक्षणाद्यपि निषिद्धं तदा साक्षात्तत्सेवायाः शिष्टगर्हितायाः, ततोऽपि गर्हिततमस्य भार्यात्वेन तत्सग्रहस्य कैव कथेति शुद्धशीलाराधकेनावश्यं तन्निरीक्षणाद्यपि वर्जनीयम् । इति गाथार्थः ॥ ५ ॥

एवं कायिकं शीलभेदत्रयमभिधायाऽथ वाचनिकं चतुर्थं शीलभेदमुभयलोकदुःखावहविकृतवचनाभिधानसहितमभिधास्यन् पूर्वं तावत्तत्प्रत्यनीकं शुभवचनमेवाह—

**महुरमणवज्जमणलिय मवाहय इह परत्थ हियकारि । वयण भासइ कज्जे, विकिय परिहरइ जत्तेणं ॥६॥**

व्याख्या—'मधुर' कोमलं अर्थ-ध्वनिभ्यां श्रोत्रानन्दकमित्यर्थः । तदपि 'अनवद्य' पापारम्भानाबाधकं, तदपि 'अनलीक'

सत्यं, तदपि 'अबाधकं' परिणामपथ्यत्वात्स्वपरयोर्दुःखानुत्पादकमबाधादं वा। ह्रस्वत्वं प्राकृतत्वात्। पाठान्तरेण त्ववाधितं पूर्वापराव्याहतार्थम्, अत एवेह परत्र हितकारि, एतज्जन्मनि जन्मान्तरे चानुकूलसंपत्तिहेतुः। ईदृशं 'वचनं' वाक्यं 'भाषते' ब्रूते, उत्सर्गतः शीलवान् श्राद्ध इति प्रक्रमः। 'कार्ये' सद्धर्मानुगतप्रयोजने। अनेन निष्प्रयोजनमीदृशस्यापि वचनस्य निषेधमाह—तथा 'विकृतं' वक्ष्यमाणलक्षणं वचनमेव 'परिहरति' वर्जयति 'यत्नेन' आदरेण, तदपरिहारे मधुरादिभाषित्वाऽनिर्वाहात्। इति गाथार्थः ॥ ६ ॥

अथ सान्वयं विकृतमेवाह —

**विकियं विकारवन्तं, इहपरलोयाण दोससंजणयं। इहलोयदोसहेऊ, रे मारियदासविसलत्ति ॥७॥**

व्याख्या—'विकृतं' विरूपमिति लक्ष्यं 'विकारवत्' इति लक्षणम्। तत्र विकारश्चेतसोऽन्यथात्वं, मदमदनमत्सराद्युपप्लुतत्वम्। तद्युक्तं यन्मनस्तद्विकारवत्। तन्निमित्तकं वचनमप्यभेदोपचाराद्विकारवत्। मदाद्यभावे तादृग्वचनाभावादिति भावः। तदुक्तम्—"मयणाउरोत्ति मयविं-भलुत्ति मच्छरपउट्ठचित्तुत्ति ॥ जं वयणं वयमाणो। जणेण नज्जिज्ज तं वज्जं ॥ १ ॥" अथ कार्यमस्याह—इहपरलोकयोर्दोषसंजनकं, तत्रेहलोकदोषा आत्मलघुताजनविरोधबन्धनधनप्राणनाशादयः, परलोकदोषाः कुगतिपातादयस्तेषामुत्पादकं उभयलोकबाधकमित्यर्थः। तत्रापीहलोकदोषसंजनकं एतज्जन्मनि दूषणोत्पादकम्। किम्? इत्याह—'रे मारित दास वृषल इति'। परलोकबाधकं त्वग्रे वक्ष्यत इत्यभिप्रायः। तत्र 'रे' इति निन्दार्थे संबो-

घनम् । मारितो विनाशितस्त्व मया अन्येन वेत्याक्रोशवचनम्।'दासोऽङ्कपतितः कर्मकरः, वृषलो हीनजातिरित्येतावप्याक्रोशविशेषौ.। इतिशब्दः सामान्याक्रोशप्रकारसमाप्त्यर्थः ।'इति गाथार्थः ॥ ७ ॥

अथ विशेषतस्तानभिदधानस्तत्फलमप्याह—

**रे असुयपुत्त ! माइय, माया ते परिसी कया हुज्जा । एत्र खरफरुसहस्रो, मारिज्ज व त दुभासिल्लं॥८॥**

व्याख्या—''रे ' इति पूर्ववत् । अश्रुतस्य लोके जनकत्वेनाप्रतीतस्य पुत्रः अश्रुतश्रुतपुत्रो जारजात इति यावत्, तस्यामन्त्रणम् । अथवा हीनजातिं कञ्चन जनकं स्टाचीकृत्य वक्ति, अमुककपुत्रः अमुकस्य पुत्रस्त्वमिति । इह च रेशब्दस्य अश्रुतपुत्रशब्देन समभिव्याहृतस्यात्यन्तदु खोत्पादकत्वख्यापनार्थत्वान्न पौनरुक्त्यम् । तथा ' माइय ' इति मा स्म त्वभागा इत्याक्रोशः । अथवा मातृगो जननीप्रतिसेवकः । तथा 'माता' जननी ' ते तव मयाऽन्येन वा ' ईदृशी कृता भवेत् ' प्रतिसेविता सपादिता स्यात् । अथवा या माता ते भवादृशस्य दुष्पुत्रस्य जनयित्री सा कदेदृशी भवेत्,सती ? स्यान्न कदाचिदित्यर्थ । एतद्भाषणफलमाह—' एव ' उक्तन्यायेन खरैर्गाढैः शब्दतः परुषैश्चाश्राव्यैरर्थतो हतोऽन्तर्मर्मव्यथितः सन् श्रोता शक्तिमान् ' मारयेत् ' विनाशयेत् । वा शब्दो विकल्पार्थः । तेन तथाशक्यमार्वे खरपरुषतरैः प्रतिहन्याद्वा त दुर्भाषावन्त पुरुषमिति गम्यते । भस्त्यर्थे इल्लः प्राकृतः । इति गाथार्थः ॥ ८ ॥

एव च दुर्भाषाशानितिं दर्शनार्थं पुनः पुनः प्रकारान्तरेणाह—

**एसो चोरो जारो, निही य लद्धो इमेण निब्भंतो । एसो रायविरोही, मांसक्खाई इमो सो उ ॥ ९॥**

व्याख्या—वस्तुतस्तथात्वे सत्यसत्यपि वा । 'एषः' पुरुषः 'चौरः' परद्रव्यापहर्ता, 'जारः' उपपतिः, 'निधिश्च' रत्नादिभृतः कलशः 'लब्धः' प्राप्तोऽनेन 'निर्भ्रान्तः' निःसन्देहः । इह च निःसन्देहत्वस्य लाभक्रियाविशेषणत्वेऽपि लभ्यलाभयोरभेदोपचारान्निधिविशेषणत्वेनोपादानमिति । 'एष राजविरोधी' च नृपविरुद्धाचरणशीलः । नृपयोर्वा विरोधकारकः, परोक्षे दोषग्रहणं पृष्ठमांसमिह मांसशब्देन विवक्षितम् । तेन 'मांसखादी' पैशुन्यभाषी 'अयं सः' इति प्रत्यक्षनिर्देशः । पुनः पुनरेतच्छब्दाद्युपादानमत्यन्ततिरस्कारार्थम् । तुशब्द एवकारार्थो भिन्नक्रमश्च । तेन चौर एवायं, जार एवायमित्यादि योज्यम् । इति गाथार्थः ॥ ९ ॥

अत्रापि फलमाह—

**तेहि व तन्नियगेहि व, मारिज्जइ सो वि दुक्खमारेण। अहवा अवरोवि इमो, भेओ इह विकियवयणम्मि ॥**

व्याख्या—'तैर्वा' चौरजारादिरूपतया क्रुष्टैर्वा 'तन्निजकैर्वा' आक्रुष्टज्ञातिभिर्वा तत्पक्षपातिभिः, वाशब्दौ तुल्यमारकत्वविकल्पार्थौ । 'मार्यते' व्यापाद्यते, 'सोऽपि' एवंरूपदुर्भाषावानपि, न केवलं पूर्वोक्तदुर्भाषावानित्यपिशब्दार्थः । कथम् ? इत्याह—'दुःखमारेण' जिह्वाछेदवक्रसेवनलोहकीलकास्यभेदादिना अति दुःखोत्पादकव्यापादनेन, तेन भाद्रो नेदृशं कथमपि भाषेत इति भावः । अथवेति प्रकारान्तरद्योतनार्थः 'अपरोऽपि' पूर्वोक्तादन्योऽपि 'अयं' वक्ष्यमाणः

'मेदः' विशेषो वर्जनीयतया 'इह' शीलवस्त्रप्रक्रमे 'विकृतवचने' विरूपकभाषणविषये संभवतीति शेषः । इति गाथार्थः ॥ १० ॥

तमेवाह—

**पाविट्ठा रायाणो, दसवेससमत्ति ज सुए भणियं । रायगुरू सुरपाई, दासीए पई गुरू कह णु ॥११॥**

व्याख्या—'पापिष्ठाः' पापीयांसो 'राजानः' नृपाः । कुतः ? इत्याह—'दशवेश्यासमाः' पापनिधानत्वेन दशक्षुद्रचरिकातुल्या इति । एतद् 'यद्' यस्मात् 'श्रुते' आगमे स्मृत्यादौ 'भणित' उक्त मन्वादिभिरिति गम्यते । तथा चागमः—"दशशुनासम चक्रं, दशचक्रसमो ध्वजः । दशध्वजसमा वेश्या, दशवेश्यासमो नृपः ॥ १ ॥" अत्र चक्रं तिलपीडनयन्त्रं तद्योगात्तैलिकोऽपि । तथा ध्वजयोगाद् ध्वज. कल्यपाल', तद्गेहे हि चिह्नार्थं दक्षिणापथे ध्वजो बध्यत इति कृत्वा । तथा 'राजगुरुः' नृपपूज्यपुरोहितादिरथ, 'सुरापायी' मद्यपः, 'दास्याः पतिः' अगम्ययोषित्कर्ता च । अतो 'गुरु' 'पूज्यः' 'कथ नु' इति केन प्रकारेण समाख्यते ? दोषाकरत्वात्त्वात्नैव । इति गाथार्थः ॥ ११ ॥

अथेहलोकबाधकान्युपसंहरन् परलोकबाधकान्याह—

**एमाइ कुलच्छायग-वयणाणि विरुद्धयाणि विगियाणि । परलोगवाहगाणि उ, न जिणो धम्मो न निव्वाणं**

व्याख्या—'एवमादीनि' एतत्प्रभृतीनि । मकारलोपो विभक्तिलोपश्चात्र प्राकृतत्वात् । आदिशब्दान्नृपभार्या स्वैरिणी,

नृपपुत्रो वा पारदारिक इत्यादिग्रहः । कुलाच्छादकानि, नैते कुलजाता एवं भापन्ते, तस्मान्न इमे तत्कुलजा नूनमन्यजातत्वादकुलीना एवेति । पाठान्तरेण तु कुलोच्छेदकानि समस्तगोत्रध्वंसहेतुत्वात्, तानि च तानि वचनानि चेति कर्मधारयः । ‘ विरुद्धकानि ’ विरुद्धान्येव विरुद्धकानि, लोकलोकोत्तरमार्गयोरिहलोकपरलोकयोश्च विरोधभाञ्जि तदुपघातकत्वात् । किमिति ? अत आह—‘ विकृतानि ’ विकारवन्ति । एवं तावदिहलोकबाधकान्युक्तानि । ‘ परलोकबाधकानि तु ’ जन्मान्तरबाधाधायकानि पुनः, न जिनो, न धर्मो, न निर्वाणमस्तीति शेषः । सर्वथा रागादिजेता जिनः सर्वज्ञो नास्ति, प्रत्यक्षादिभिरनुपलभ्यमानत्वात् । धर्मोऽपि पूर्वोदितस्वरूपो नास्तीत्यनुपज्यते, तदुपदेष्टुः सर्वज्ञस्याभावात् । नैव ‘निर्वाणं’ कृत्स्नकर्मक्षयलक्षणा निवृत्तिस्तदुपायस्य धर्मस्यैवाभावात्, एवमादीनीत्यत्रापि संबध्यते, तेन न पापं नापि तत्फलमित्यादिग्रहः । एतानि हि मिथ्याभिनिवेशादिप्रभवत्वाद्दुर्गतिहेतुत्वाच्च परलोकमेव शुभं बाधन्ते, तेन परलोक एव बाधाविधायीनीति परलोकबाधकानि, न त्विहलोकेऽपि मारणादिनिमित्तानीति । सर्वाणि च विकृतवचनानि लोकविरागस्वलघुतादिनिमित्तत्वाद्धर्मार्थकामध्वंसकत्वाच्च वर्जनीयानि । तदुक्तम्—“ विगियवयणं वयमाणो । विसिट्ठलोओ विरज्जए सज्जो ॥ तत्तो सो असहाओ असहाओ अत्थकामाणं ॥ १ ॥ तेहिं रहिओ गिहत्थो ॥ दुत्थावत्थोत्ति कत्थवि य अत्थं । न जणे जणयइ तम्हा । विकियवयणं विवज्जिज्जा ॥ २ ॥ ” इति गाथार्थः ॥ १२ ॥

अथ विकृतवचनपरिहारफलमुपदर्शयन्नुपदेशमाह—

एमाइवयणपरिव-ज्जणेण ज विकियवयणपरिहारो। इह परलोगे य सुहा-वहोत्ति ता तत्थ सो जयए ॥

व्याख्या—' एवमादिवचनपरिवर्जनेन ' उभयलोकविरुद्धादिभाषित्यागेन ' यद् ' यस्माद् ' विकृतवचनपरिहार ' असभ्यभाषणत्यागः ' इह ' इति अत्र जन्मनि ' परलोके च ' जन्मान्तरे 'सुखावहः' शुभावहो वा यथाक्रमं धर्मार्थादिहेतुत्वेन स्वर्गादिहेतुत्वेन चेति भावः। इह च सदोषवचनवर्जनस्य हेतुत्वेनानुवाद कृत्वा प्रस्तुतविकृतवचनपरिहाररूपस्य शीलचतुर्थभेदस्य सुखावहत्वं विधीयत इति न पौनरुक्त्यम्। इति शब्दो हेत्वर्थस्तेन यतोऽयं सुखावहस्तस्मात्कारणात् 'तत्र' विकृतवचनपरिहारे ' सः ' इति शीलवान् श्राद्धः ' यतते ' यत्नं कुर्यादिति। एवंप्रयत्नवतो हि मधुरादिभाषित्वनिर्वाहसर्वार्थसिद्धेरिति। तदुक्तम्—" इयं वयणामयपरिसेय। समियनीसेससंचित्तसतोवा ॥ आणादिया य आणा। जणा पडिच्छति दत्ती य ॥ १ ॥ एव अत्थो कामो। धम्मो य पवत्तवयसरूवो से ॥ सासिज्जइ नियमेण। जसो य धवलेइ भुवणयल ॥२॥ " इति गाथार्थः ॥ १३ ॥

एव विकृतवचनाभिधानसहित वाचनिकचतुर्थशीलभेदमुभयलोकदुःखावहमुक्त्वाऽथेहलोकदुःखावहं विकृतवेषाभिधानसहितं कायिक पञ्चमं शीलभेदमाह—

नियभूमिगाणुरूवो, वेसो सुस्सावगाण उचिउ त्ति। नवरि महग्घाभरणो, विं कह सिढिंगागिई होइ ॥१४॥

व्याख्या—' निजभूमिगानुरूपः ' क्षत्रियवणिगादीश्वरानीश्वरोत्सवानुत्सववद् युवस्थविरादिस्वस्वपदव्युचित' 'वेषः'

नेपथ्यं 'सुश्रावकाणां' विशिष्टश्रमणोपासकानां 'उचितः' संगतो यतः परिधातुमिति शेषः । 'इति' तस्माद्धेतोः 'नवरं' केवलं 'महार्घाभरणोऽपि' महामूल्यालङ्कारोऽप्यास्तां तदन्यः, 'कथं' केन प्रकारेण 'पिङ्गाकृतिर्भवति' पिङ्गाकृतिहेतुत्वात् पिङ्गाकृतिर्विटाकारापादकः स्याद्वेषः पुरुषो वा। कथं पिङ्गाकृतिः स्यात ? नैवेत्यर्थः । न हि महार्घाभरणत्वादिकं पिङ्गत्वापादकम्, अपि तु वक्ष्यमाणशैलूषाद्युचितवेषत्वम्, तदभावे तु प्रधानतरोऽपि वेषो न दुष्यति ॥ इति गाथार्थः ॥ १४ ॥

साम्प्रतं परिहरणीयताख्यापनाय विकृतवेषं दूषयन्नाह—

**कुलदेसाण विरुद्धो, वेसो रन्नो वि कुणइ नो सोहं। वणियाण विसेसेणं, विसेसओ ताण इत्थीणं ॥१५॥**

व्याख्या—'कुलदेशयोः' गोत्रराष्ट्रयोः 'विरुद्धः' अनुचितः 'वेषः' नेपथ्यं, तत्र कुलविरुद्धो यथा—ब्राह्मणक्षत्रियादिकुले नीलीरक्तवस्त्रपरिधानं श्वेतादिवस्त्रपरिधानमपि वा लंखाद्याकृत्यापादकम्, देशविरुद्धो यथा सिन्धुदेशे शिरोवेष्टनविरहः काशीदेशे वा तद्विधानम्, ईदृशो वेषो 'राज्ञोऽपि' सकललोकमान्यस्य भूपस्याप्यास्तां तदितरस्य 'न करोति' न विधत्ते 'शोभां' श्रियं, 'वणिजाम्' नैगमानां 'विशेषेण' अतिशयेन, न करोति शोभामिति योज्यम्, राज्ञः, सकाशात्तेषां लघुत्वात्, तत एव विशेषतः 'तत्स्त्रीणाम्' वणिग्योषिताम्, यदा च सामान्येनैव शिष्टवणिगादीनामेव तदा सुतरां स्तुतजगत्रयाविगानविश्रुतार्हतश्रुतानां श्रावकश्राविकाणामिति भावः । इति गाथार्थः ॥ १५ ॥

अथ सुश्रावकाणामधिकृत वेषमाह—

**संतलय परिहाण, उज्झलवचोडाइयं च मज्झिमय। सुसिलिट्ठमुत्तरीय, धम्म लच्छि जस कुणइ ॥१६॥**

व्याख्या—' सन्तलकम् ' बन्धेन विशेषवद्, यत्र परिहितपरिधानप्रान्तेनैव कच्छां दत्त्वा पुनः सङ्कोचितेन कटीवेष्टन कृत्वा पश्चाद्भागे बन्धो दीयते, पूर्वं वाऽग्रभागे बन्ध दत्त्वा पश्चादञ्चलान्तरेण कच्छा दीयते मल्लादिवत् तत्सन्तलक कच्छ याऽभिधीयते, एतच्चाग्रत पश्चाच्चाप्रलम्बमानप्रान्ततया न विभूषाविशेषहेतुः स्यात्ततोऽनेनान्यदपि यत्तादृश तदुपलक्ष्यते तेन सन्तलकसदृशम्, 'परिधानम् ' अधोनिवसनम्, उज्झलव श्लथ चोलः परिधान तदतिगच्छत्यतिक्रामति ' चोडातिगम्, ' परिधानोपरितनप्रान्तातिक्रान्तम्, ततो उज्झलम्ब च तच्चोडातिग चेति कर्मधारय , ' चः ' समुच्चये ' मध्यमकम् ' सकल-बाहुपृष्ठोदरादिमध्यमाङ्गाच्छादकमङ्गिकालक्षण द्वितीय वस्त्रम्, तथा ' सुश्लिष्टम् ' श्रतलिनम् ' उत्तरीयम् ' उपरितनमाच्छादनवस्त्रमेतद्विधिना परिधीयमानम् ' धर्मम् ' पुण्यम् ' करोति ' विधत्ते शास्त्रीयसदाचारत्वात् स्वपरयोर्मदनानुद्दीपकत्वाच्च, ' लक्ष्मीम् ' श्रिय चालघुतापादकत्वाज्जनानुरागहेतुत्वाच्च, ' यशः ' कीर्त्ति च शिष्टतानिदानत्वादनुपहास्यत्वाच्च, करोतीत्यनुवर्त्यते, एव चास्य वेषगुणवत्तोपवर्णनवाक्यस्य साक्षात्प्रवृत्त्यनभिधायकत्वेऽपि परिणतिसुरसमात्रमिति वाक्यत्रत्प्रवृत्तौ तात्पर्यम्, तत एवंविधो वेषो विधेय इति भावः। इति गाथार्थः ॥ १६ ॥

अथ सुश्राविकाणा गाथाद्वयेन तमाह—

परिहाणमणुब्भड, चलणकोडिमज्जायमोसरंतं तु। परिहाणमक्कमंतो, य कंचुओ होइ सुसिलिट्ठो॥१७॥
पच्छायंतं अंगं, सुसिलिट्ठं उत्तरिज्जमणुरूवं। विकियं तव्विवरीयं, वज्जइ जिणभवणमाईसु ॥ १८ ॥

व्याख्या—' परिधानम् ' निवसनम् ' अनुद्भटमेव ' अकृतभङ्गिविशेषबन्धनमेव, अनुस्वाराश्रवणं प्राकृतत्वात् ' चलनकोटिमर्यादाम् ' पादाग्रसीमाम् ' ओसरंतं 'ति प्राप्नुवत् ' तुः ' अवधारणार्थो योजितश्च, तथा परिधानं निवसनमाक्रामंश्चतुर्भिरङ्गुलैराच्छादयन्, उपलक्षणं चैतत्–बाहू अपि करपर्यन्तमाच्छादयन्निति दृश्यम् । ' कञ्चुकः ' अङ्गिकारूपो भवति । ' सुश्लिष्टः ' घनवानादिव्यूत इत्यर्थः । अनेनातिसूक्ष्मवस्त्रमयत्वं निषेधति । ' प्राच्छादयत् ' प्रकर्षेणादृश्यतां नयत् ' अङ्गं ' शिरःप्रभृति पादपर्यन्तम् । अनेन संपूर्णस्यैव पटस्य प्रावरणौचित्यमाह, न तु तदर्द्धस्य, तस्य सकलाङ्गानाच्छादकत्वात् । ' सुश्लिष्टम् ' अतिनिबिडं, न तु मङ्कणकादिवदतिसूक्ष्मम् । ' उत्तरीयम् ' उपरितनवस्त्रम्, ' अनुरूपम् ' उचितं भवति, पूर्वोक्तधर्मादिगुणाधायकत्वात् श्राविकाणामिति प्रक्रमः । यदि तु कदाचित्तलिनवसनाच्छादनमपि क्रियते तदा द्वितीयवस्त्रेणैव सह न केवलमिति भावः । एवंतुमयेषामप्युचितं नेपथ्यमभिधाय विकृतं तदभिधित्सुः पीठमारचयति । ' विकृतं ' विकारवत्, मदनोद्दीपकत्वात् शिष्टोपहास्यत्वाच्च । ' तद्विपरीतम् ' उक्तादन्यादृशं नेपथ्यमिति प्रक्रमः, ' वर्जयति ' परिहरति श्रावकादिः । तथा चोक्तम्—" वेसेण जेण दिट्ठेण । सिड्ढलोओभिमन्नए मणसा ॥ नूणं एस सिडिंगो–त्ति तं विवज्जिति धम्मिट्ठा ॥ १ ॥ " विशेषतश्चाह ' जिनभवनादिषु ' अर्हदायतनसाधूपाश्रयगमनप्रभृतिषु विशेषेण वर्जयतीत्यर्थः,

श्री खरतरगच्छीय ज्ञान मन्दिर जयपुर

अनुचितस्य सर्वत्रापि परिहार्यत्वाद्विशेषतश्चैत्यादौ, तत्र हि केवलधर्मार्थप्रवृत्तेः, विकृतवेषस्य तु कामादिजनकत्वेनाधर्महेतुत्वाभिप्रायेण परिहारः। इति गाथार्थः ॥ १७–१८ ॥

अथ विकृतवेषमाह—

लखस्स व परिहाणं, गसइ व देहं तहंगिया गाढा। सिरवेढो टमरेणं, वेसो एसो सिढिंगाणं ॥ १९ ॥

व्याख्या—'लङ्खस्येव' शैलूषस्येव 'परिधानं' निवसनं यत्रेति शेषः, स ह्यग्रभागपश्चाद्भागयोः प्रलम्बमानं प्रकटसमस्तोरुकाण्डमत्यन्तमाकृष्य च परिधत्ते। अनेन च सन्तलकपरिधानस्यैतद्विपरीतस्वरूपस्याविकृतता स्वयमेव प्रतिपादिता भवति, एवमुत्तरयोरपि द्रष्टव्यम्। तथा 'ग्रसत इव' गाढाकृष्टिपरिहिततयाऽऽत्मसात्कुर्वतीव 'देहं' शरीरं, 'तथा' इति वाक्यार्थोपक्षेपार्थो योजितश्च, 'अङ्गिका' प्रतीता, कुतो ग्रसत इव? यतो 'गाढा' शरीरेण निबिडसम्बन्धवती तद्भेदवती चेत्यर्थः। 'शिरोवेष्टः' मस्तकवेष्टनरूपवस्त्रविशेषः 'टमरेण' इति विशेषणे तृतीया, शिरोवेष्टप्रान्तस्य किञ्चिद्विशेषवत ऊर्ध्वीकृत्य बन्धनरूपटमरस्तेन विशिष्टः शिरोवेष्टो यत्रेति, 'वेषः' नेपथ्यम् 'एषः' ईदृशो विकृतः 'विङ्गानां' विटानां, न तु शिष्टानां भवतीति गम्यते। उपलक्षणं चैतत्—तेनान्यदपि यद्वक्षःस्थलकेशापनयनं श्मश्रुरोम्णां वा रेखामात्राकारतया धारणं तदपि विङ्गत्वापादकं विकृतवेषतया बोद्धव्यम्। अस्य चैव विषनिन्दावाक्यस्य साक्षान्निषेधनाभिधायकत्वेऽपि परिणतिविरसं यतममिति वाक्यवत्प्रवृत्तौ तात्पर्यम्। एवमुत्तरस्मिन्नपि स्त्रीवेषनिन्दावाक्ये तात्पर्यं बोद्धव्यम्, अत

ईदृग्वेषः परिहार्य इत्युपदेशः । इति गाथार्थः ॥ १९ ॥

अथ गाथात्रयेण स्त्रीणां तमाह—

असिलिट्ठु नीविबंधो, चूडासंफुसइ पायनहरेहं । जंघद्धं उग्घाडं, परिहाणं हवइ वेसाणं ॥ २० ॥

सिहिणाण मग्गदेसो, उग्घाडो नाहिमंडलं तह य । पासा य अद्धपिहिया, कंचुओ सहइ वेसाणं ॥२१॥

कुंकुमरसपिंजरियं, अंगं काऊण गहिय आहरणं । मंकणयपाउयंगी, कुलवहु कह जाउ जिणभवणे ॥

व्याख्या—'अश्लिष्टः' अतिशिथिलः 'नीविबन्धः' निवसनग्रन्थिबन्धः, तथा 'चूडा' निवसनाग्रकलापः 'संस्पृशति' आमृशति 'पादनखरेखां' चरणनखाग्रभागं, विच्छित्तिविशेषबद्धत्वेन प्रलम्बमानत्वात् । पश्चाद्भागे तु 'जङ्घार्द्धं' लोकरूढपिण्डिकार्द्धम् 'उद्घाटं' प्रकटं यत्र तदिति शेषः 'परिधानं' निवसनं 'भवति' स्यात् 'वेश्यानां' द्वयचारिकाणां, न तु कुलाङ्गनानामिति भावः । तथा 'सिहिनाणं'ति स्तनानां 'मार्गदेशः' वक्षःस्थलप्रदेशः 'उद्घाटः' अनावृतो येनेति शेषः । 'नाभिमण्डलम्' उदरकूपिका च तथाऽनावृतमित्यर्थः । 'पार्श्वौ' उदराधःप्रान्तावपि । अर्द्धपिहितौ' असमस्ताच्छादितौ असौ 'कञ्चुकः' प्रतीतः 'सहते' शोभते वेश्यानामिति पूर्ववत् २१ । तथा 'कुङ्कुमरसपिञ्जरितं' कश्मीरजद्रवपिङ्गम् 'अङ्गम्' वदनादिचरणपर्यन्तसकलशरीरं 'कृत्वा' विधाय, अनेन च मुख-हस्तमात्रस-

मालभनस्याऽवैधव्याभिव्यञ्जकस्यानिषेधमाह । 'ग्रथिताभरणं' बद्धालंकरणम्, आभरण तिलकादिनूपुरपर्यन्तं समस्तमलंकरणम्; अनेनापि कण्ठ-कर्ण-प्रकोष्ठाद्याभरणस्य सभर्तृकायोग्यस्य इतरस्याप्यनुद्भटस्याऽनिषेधमाह। अथवा एवं सकलमाभरण गृहीत्वा 'मङ्कणकप्रावृताङ्गी' देशविशेषोद्भवसूक्ष्मवस्त्रभेदाच्छादितशरीरा, मङ्कणकाभिधानं तथाविधाऽति सूक्ष्मवस्त्रोपलक्षणार्थं, ततोऽतिसूक्ष्मवस्त्राच्छादिताङ्गीत्यर्थः। 'कुलवधूः' कुलाङ्गना 'कथ' केन प्रकारेण 'यातु' गच्छतु जिनभवने?, उपलक्षणत्वाच्चाऽस्यः साधूपाश्रयेऽपि च? नैवेत्यर्थः। निराभरणेऽपि शरीरे सूक्ष्मवस्त्राच्छादने प्रकटाङ्गत्वेन मदनोद्दीपकता स्यात्, किं पुनः सकलाभरणतेति, तेन विशेषतस्तत्र सूक्ष्माच्छादननिषेध इति भावः। एतेन यद्येवंविधवेषा चैत्यादौ न याति, तर्हि कतरप्रकारवेषा कुलाङ्गनापि यातु, इत्यादि जिनमतरहस्यानभिज्ञानां दुर्विदग्धानां सोल्लुण्ठभाषित परिहृतमवसेयम्; मदनोद्दीपकतयाऽनुचितस्यैव निषेधात्, तदितरस्य तु जिनभक्तिविशेषाभिव्यञ्जकस्य विशिष्टतरस्याप्यनुज्ञानात्। इति गाथात्रयार्थः ॥ २०-२१-२२ ॥

उपसंहरन्नाह—

तम्हा विलयं वेस, परिवज्जइ सावओ किमच्छरियं?। नवर सुसाविया उ, दुन्नियच्छ वज्जयतीउ ॥

व्याख्या—यस्माद् विकृतवेषः कामोद्दीपन-लघुताद्यापादकः, तस्माद्धेतोर्विकृतं—विकारवन्त शैलूषाद्युचित 'वेष' नेपथ्य 'परिवर्जयति' परिहरति 'श्रावक' श्राद्धः 'किमाश्चर्यं' किं चित्रम्? न किञ्चिदित्यर्थः। सद्गुरुभ्यः

सम्यक् श्रावकसामाचारीश्रोता हि तामनुतिष्ठन्नेव श्रावक उच्यते, ततस्तस्य तत्परिहारे न किञ्चित् कौतुकमिति भावः ।
' नवरं ' केवलं विशेषतश्चेति यावत् । सुश्राविकाः—प्रवरश्रमणोपासिकाऽङ्गनाः दुर्नेपथ्यं—वेश्याद्युचितविकृतवेषं वर्जय-
न्ति–परिहरन्त्येव, ' तु ' शब्दोऽत्रधारणार्थः । अथवा श्रावकवत् श्राविका अपि परिहरन्त्येव तम् , न तत्र कौतुकम् ; नवरं
सुश्राविकाः पुनः ' दुन्नियच्छं' ति दुर्निवसितं—दुष्परिहितं वर्जयन्ति । अत्र पक्षे ' तु ' शब्दः पुनरर्थो योजितश्च, तेनाऽ-
नुद्भटत्वादिगुणोपेतमपि परिधानमञ्चलद्वयपरस्परानुस्यूतमेव परिदधाति । तथा सुश्लिष्टमपि कञ्चुकमनाकृष्टमेव, महदप्यु-
त्तरीयं ललाटाद्यावारकमेव, महार्घमप्याभरणं मुहुर्मुहुरप्रकाशितमेवेति काश्चिन्मन्दधर्मवासनाः श्राविका अपि नैवमुपल-
भ्यन्ते, अतः सुश्राविका इत्युक्तमिति गाथार्थः ॥ २३ ॥

कायिक–वाचनिकानभिधाय अथाध्यात्मिकं षष्ठं शीलभेदमाह—

**अदुराराहत्तं पुण, छट्ठं अंगं तु सीलवत्तम्मि । परियणसयणमहायण, अणुकूल तिहिं पि करणेहिं ॥**

व्याख्या—' महाप्रयत्नप्रसाधितप्रयोजनशतैरपि यो नाराध्यते—न प्रसाध्यते स दुराराधः, तद्विपरीतोऽदुराराधः,
तद्भावोऽदुराराधत्वं सुखाराध्यत्वमित्यर्थः । ' पुनः ' शब्दो विशेषणार्थः । षष्ठमङ्गम् अवयवो भेद इत्यर्थः, शीलवत्त्वे
प्रक्रान्ते इत्यर्थः । ' सीलवत्तम्मि ' इति च षष्ठ्यर्थे सप्तमी । अथवा अङ्गं कारणं शीलवत्त्वे प्रक्रान्त एव । कथमस्य शीला-
ङ्गता ? इति चेत् , उच्यते—दुराराधस्य हि रोषाद् वधादिप्रवृत्तौ धर्मादिध्वंसकत्वात् । तदुक्तम्—" सयणेण परियणेण

य, कए वि कज्जे महापयासेण । न दुराराहो तुस्सइ, दुस्सइ किय दूसणविगप्पा ॥ १ ॥ सो य असतोसाओ, फरुस भासेइ करेइ य वहाई । एव धम्मो नस्सइ, कामत्थजसा वि य कमेण ॥ २ ॥ " ततः किम् ? इत्याह—' परिजनो ' भृत्यादिः, ' स्वजनः ' पितृव्यादिः, ' महाजनो ' नगरप्रधानलोकः तेषु, ' अनुकूलो ' दक्षिणः तद्वचनाद्यनुवर्तनेन तच्चित्ताह्लादकः स्यादिति शेषः । श्रावक इति प्रकृतम्, ' त्रिभिरपि करणै ' कार्यसाधकतमैर्मनोवाक्कायैः, न वचनमात्रेणैवेति भावः । दुराराधत्वस्य हि दोषशताकुलत्वमाकलय्य तत्प्रतिपन्थिनि सुखाराध्यत्वे सकलपुरुषार्थः साधकतामयति । तदुपायश्च परिजनाद्यानुकूल्यमिति शीलधर्मार्थिना तत्राऽप्यवश्य प्रवर्तितव्यमिति रहस्यमिति गाथार्थः ॥ २४ ॥

दोषाम्भोधरजालवायुपटली सौजन्यवन्यामधु, पैशुन्योद्धतपांसुवारिनिकरः शालीनताश्रीगृहम् ।
निःशेषामलधर्मकर्मकमलाविर्भावलीलासरः, पुण्यैः कस्यचिदुल्लसत्यलमदः श्रीशीलवत्त्वं हृदि ॥१॥

इति युगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचितायां षट्स्थानकवृत्तौ

शीलवत्त्वद्वितीयस्थानकविवरणं समाप्तम् ॥

—✻—

# अथ गुणवत्त्वनामकं तृतीयं स्थानकम् ।

उक्तं शीलवत्त्वं द्वितीयं स्थानकम् । अथ तस्मिन् सत्येव श्रावकस्य गुणवत्त्वमुपजायते, इति तदनन्तरं तत्प्रधानकार्यभूतं पञ्चप्रकारं गुणवत्त्वमाह —

**गुणवत्तं पंचविहं, सुत्तरुई चेव तह य अत्थरुई । अणभिनिवेसी य तहा, करणरुई अभिट्ठिउच्छाहो ॥१॥**

व्याख्या—' गुणवत्त्वं ' प्रागुक्तार्थम्, एतच्च विशिष्टतरकर्मक्षयोपशमसाध्यम् । इह तु तद्भासाऽव्यभिचारितत्पूर्वकालावश्यंभाविसूत्ररुच्यादिमत्त्वमपि अभेदोपचाराद् गुणवत्त्वमुच्यते । तत् ' पञ्चविधं ' पञ्चप्रकारम् । तदेवाह—' सूत्रं ' अर्थविशेषसूचकत्वादिलक्षणम् । यदुक्तम्—" सूयणमित्तं सुत्तं, सुइज्जइ केवलो तहिं अत्थोत्ति । जं पुण से वक्खाणं, आयरिया परिकहन्ति " ॥ १ ॥ अथवा लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः, पुरुषविशेषप्रणीतत्वलक्षणं वा सूत्रम् । तदुक्तम्—" सुत्तं गणहररइयं, तहेव पत्तेयबुद्धरइयं च । सुयकेवलिणा रइयं, अभिन्नदसपुव्विणा रइयं ॥ १ ॥ " तत्र सूत्रे-ग्रन्थे रुचिः-श्रद्धाप्रामाण्यप्रतीतिः, सा यस्याऽस्ति स सूत्ररुचिः श्रावकः, गुण-गुणवतोरभेदोपचाराच्चेह स एव गुणवत्त्वमुच्यते, अर्थरुच्यादिष्वपि । ' एव ' शब्दोऽवधारणे, तेन शेषसर्वरुचीनां कारणत्वेनाद्यत्वादयमेवैको गुणवत्त्वमित्यर्थः । ' च ' समुच्चये, स च गाथान्ते योज्यः । तथा चेति समुच्चये, अर्थे—सूत्र-

स्वाभिप्रेते रुचिर्यस्यासौ अर्थरुचिः । तथाऽभिनिवेशो वितथेष्वपि स्वज्ञानेषु अनुष्ठाने वा सत्यत्वाग्रहः, स विद्यते यस्यासौ अभिनिवेशी, तादृशो यो न भवत्यसौ अनभिनिवेशी, प्रज्ञापनीय इत्यर्थः । चः समुच्चये, तथेति प्रकारान्तरोपक्षेपार्थः । करणे सूत्रोक्तानुष्ठानविधाने रुचिर्यस्यासौ करणरुचिः । तथाऽनिष्ठितोऽनवच्छिन्न उत्साहः करणाभिलाषातिशयो यस्यासौ अनिष्ठितोत्साहः स चेति । सर्वत्र चात्रैवं क्रमोपन्यासकारणं वक्ष्यामः । इति गाथार्थः ॥ १ ॥

तत्रादौ तावत् समस्तार्थरुच्यादिगुणावचमूलभूता सूत्ररुचि', तस्या अप्यर्थरुचिशून्याया अकिञ्चित्करत्वात् तदनन्तरमर्थरुचिं चाह—

सुत्तं जिणिंदसमए, ज जं रुच्चइ तदेव पयस्स । पुणरुत्तं पुच्छाए, अत्थं निस्संकिय कुणइ ॥ २ ॥

व्याख्या—' सूत्रं ' पूर्वोक्तशब्दार्थं ' जिनेन्द्रसमये ' तीर्थकरसिद्धान्तविषये, ' यद्यत् ' इति वीप्सया सर्वं संग्रहमाह, तेनाऽर्थतस्तीर्थकरैर्य उपदिष्टः सिद्धान्तः सूत्रतस्तु गणधरैर्ग्रथितः । तदन्यदप्यभिचार्यर्थाभिधायक यद्यत् प्रज्ञापनाप्रकीर्णकादिकं रोचते—भव्यतया प्रतिभासते तदेव जैनसूत्रमेव, न तु कपिलादिप्रणीतमपि एतस्य सूत्ररुचेः श्राद्धस्य । यथाहि कश्चित्कामुकः कस्याश्चित् कान्तकान्तायामत्यन्तासक्तस्तद्वदनारविन्दमेवाऽनवरतमवलोकयति, श्लाघते, ध्यायति च, तथैषोऽपि श्राद्धः सूत्ररुचेः सकाशात् तदेकाग्रमनाः सन् तदेव सूत्रममृतमिव मन्यमानः पठति च गुणयति च शृणोति च । किं बहुना ? तन्मय एवास्ते, अन्यथा सूत्ररुचित्वस्यैवाऽनुपपत्तेः । तदुक्तम्—" पढइ गुणेइ सुणेइ य, उचियं

उचिएण चेव विणएणं । जिणसासणबहरित्तं, सेसमतत्तंति मन्नन्ते ॥ १ ॥ ” शेषस्य कथमतत्त्वरूपतेति चेत् ? उच्यते— अप्रामाणिकार्थाऽभिधायकत्वेनाऽसूत्रत्वात् । तत्र हि प्रकृतीश्वरादयः पदार्थाः प्रतिपाद्यन्ते, ते च विचार्यमाणाः प्रमाणै- र्नोपपद्यन्ते । यथा च नोपपद्यन्ते तथा सम्मत्यादिग्रन्थेभ्योऽवसेयम् ; अत्र तु ग्रन्थगौरवभयान्नोच्यते इति । अतोऽप्रमाण- त्वाभावान्नार्थाः, तथा च तदभिधायकं कथं तत्सूत्रम् ?, अर्थाभिधायकस्यैव सूत्रत्वाभिधानात् । तस्माच्च शेषं सूत्रं तत्त्वमिति हृदि निधायैव च सूत्रकारेण तदेवेत्यवधारणमकारि सूत्रे, अन्यथा किमनेन व्यवच्छिद्याद् ? इत्यर्थः । तदेवं कार्यद्वारेण सूत्ररुचिं व्याख्याय तदनन्तरमर्थरुचिमपि कार्यद्वारेणैवाह—‘ पुनरुक्तं ’ पौनःपुन्येन पृच्छया प्रश्नेन हेतुभू- ततया अर्थं सूत्राभिधेयं गुर्वादिभ्य एव श्रुतं सन्तं ‘ निःशङ्कितं ’ निःसंदेहं करोति विधत्ते यः सोऽर्थरुचिरित्यध्याहारः । स हि समस्तश्रेयःकार्येषु समीचीनप्रवृत्तिनिबन्धनतया अर्थमभ्यवहृतं मन्यमानस्तत्राऽत्यादरवत्त्वेन तं समाकर्णयन् स्वल्पे- ऽपि संदेहे मुहुर्मुहुः पृच्छति, मा भूत् काचिदप्यर्थसंदेहादन्यथा प्रवृत्तिरिति बुद्ध्या । तदुक्तम्—“ सुत्तरुई विनसत्तो, संतो कज्जेसु अमुणियसुयत्थो । तो अत्थनाणहेऊ, अत्थरुई इत्थ सुपसत्था ॥ १ ॥ ” एवमस्याऽर्थरुचित्वमभिव्यज्यते । इति गाथार्थः ॥ २ ॥

सत्यामप्यर्थरुचौ कथंचिदन्यथाऽवगमे करणे वा नाऽभिनिवेशो विधेय, इति तदनन्तरमनभिनिवेशनं तत्पूर्विकैव च करणरुचिरपि फलदेति करणरुचिं च कार्यद्वारेणैवाह—

अणभिनिवेसी एसो, पन्नविओ मुयइ कुग्गह झत्ति । आसेवेइ अभिक्खं, सुत्तुत्त तेण करणरुई ॥३॥

व्याख्या—' अनभिनिवेशी ' अतत्त्वाऽनाग्रही ' एषो ' अयं श्राद्धो भवतीति गम्यते । ' प्रज्ञापित ' परेण तत्त्व बोधितः सन् ' मुञ्चति ' त्यजति ' कदाग्रह ' कुत्सितावबोधकराभिनिवेश ' झटिति ' शीघ्र प्रज्ञापनानन्तरमेवेति शेषः । अभिनिवेशस्य हि विपर्ययरूपतया तद्वतो ज्ञान क्रिया वाऽकिञ्चित्करे एवेत्यवगम्य सर्वथा त परिहरन् अनभिनिवेशी प्रज्ञापनीयश्चासौ उच्यते, फलभाग् भवतीति । तदुक्तम्—" न हवइ सम्म सुहफला,—भाई भव्वो विवज्जयब्भावा । तम्हा तप्पडिसेहो, गुणगणवीय अमोह ति ॥ १ ॥ अणभिनिवेसो जीवो, पन्नवणिज्जो त्ति सुविहियजणस्स । होइ उवएसणिज्जो, तत्तो सो सीलव होई ॥ २ ॥ " अर्थरुचौ करणरुचौ वा नाऽभिनिवेशित्वमुपपद्यते, इति तन्मध्ये तस्योपादानमिति । तथा ' आसेवते ' अनुतिष्ठति ' अभीक्ष्ण ' निरन्तर ' सूत्रोक्तम् ' आगमप्रतिपादित जिनपूजन-वन्दनकादिकमनुष्ठान यत इति शेष , तेन आसेवनेन हेतुना करणरुचिरसौ भवतीति गम्यते । स हि सत्यपि सूत्रार्थरुचिमत्त्वे—" क्रियैव फलदा पुसां, न ज्ञान फलद मतम् । न हि स्त्री-भक्ष्य-भोगज्ञो, विज्ञानात् फलमश्नुते ॥ १ ॥ " इति परिभावयन् विशेषतः करणे श्रद्धालुः स्यात् । तथैव च चारित्रयोग्यतया निर्वाणपथिकः स्यात् । तदुक्तम्—" सुपसत्थवित्थरपरमत्थविऊ वि करणरुइ विरहे राहिऊ हियकरणेण हिय न पावेइ पाणी ज, तो करणरुई रुइर कारणमव्वाहय हियत्थाण पाणीण निव्वाण पुरस्सयपह " । इति गाथार्थः ॥ ३ ॥

करणरुचित्वेऽपि कथंचिदुत्साहोच्छेदे सति न फलसाधकतेति तदनन्तरमनिष्ठितोत्साहं कार्यद्वारेणाऽभिदधानो गुणवत्त्वमुपसंहरन् ऋजुमतिव्यवहरणमुपक्रममाण आह—

**कायव्वेसु सुहेसुं, अणिट्ठिओ होइ तस्स उच्छाहो। एयं से गुणवत्तं, रिउववहरणं पुणो यस्स ॥४॥**

व्याख्या—योऽनिष्ठितोत्साहगुणवानिति प्रक्रमः, तस्योत्साहो भवतीति संबन्धः । केषु ? इत्याह—' कर्तव्येषु ' विधेयेषु, ' शुभेषु ' सिद्धान्ते विधेयतया प्रतिपादितत्वेन प्रशस्तेषु वन्दन–पूजना–ऽऽवश्यकादिषु, अनेन पैशुन्य–परीवाद–चौर्याद्यप्रशस्तकार्यव्यवच्छेदः । ' अनिष्ठितो ' अनवच्छिन्नो ' भवति ' जायते, ' तस्य ' एतद्गुणवतः श्राद्धस्योत्साहः कार्यकरणाभिलाषातिशयः, दुर्गतशेखरस्य अनर्घरत्नाकरावाप्तौ रत्नग्रहणोत्साहवत् । एवमेव धर्मक्रियास्वपि प्रवृत्तिः फलवती स्यात् । उक्तं च—" धम्मकिरियारुई विहु, न ताओ साहेइ निट्ठिउच्छाहो । अच्छिन्नुच्छाहा पुण, कुणंती दुविहसिरिपत्ता ॥ १ ॥ " लोकेऽपि अच्छिन्नोत्साहता कार्यसाधिकेति श्रुतिः । तथा च पञ्चाख्यानके अण्डकप्लावनेन समुद्राभिभूतस्य चटकस्योक्तिः—" अनिर्वेदः श्रियो मूलं, चञ्चूर्लोहमयी मम । अहो–रात्राणि दीर्घाणि, समुद्रः किं न शुष्यति ? ॥ १ ॥ " इति । तदेवमनिष्ठितोत्साहता पञ्चमं गुणवत्त्वम् ।

पञ्चापि चैते सूत्ररुच्यादयः सातिशयाः सन्तः क्रमेण सम्यग्दर्शनगुणोत्कर्षाधायिन इत्येतेऽपि गुणवत्त्वमुक्ताः । उपसंहरति—' एतत् ' पूर्वोक्तं सूत्ररुच्यादिमत्त्वं ' से ' तस्य श्रावकस्य गुणवत्त्वम्, एतदभावे हि शेषगुणसद्भावेऽपि निर्गुण-

स्यमेव तस्वत इति भावः। अथ ऋजुव्यवहरणं चतुर्थं स्थानं प्रस्तौति—' ऋजुव्यवहरणं ' पूर्वोक्तशब्दार्थं, ' पुनः ' शब्दो गुणवत्त्वाद् विशेषावद्योतने, तेन गुणवत्त्वं तावत् पूर्वोपदर्शितरूपम्, ऋजुव्यवहरणं पुनरेतस्य श्रावकस्य चतुर्थं स्थानं भवतीति गम्यते। इति गाथार्थः ॥ ५ ॥

अपि चलति सचूलो रत्नसानुः कृशानु,-स्तृणमपि च न वाऽत्ति व्यात्तवक्त्रोऽपि चाऽहिः।
न दशति शिशुभेकं जातुचिज्जायते नो, पुनरिति गुणवत्त्वं वर्जयित्वा विमुक्तिः ॥ १ ॥

इति युगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचितायां षट्स्थानकवृत्तौ गुणवत्त्व तृतीयस्थानक-
विवरणं समाप्तम् ॥



## अथ ऋजुव्यवहरणनामकं चतुर्थं स्थानकम् ।

उक्तं शीलवरस्य प्रधानकार्यभूतं गुणवत्त्वं तृतीयस्थानकम्। अथ गुणवत्त्वस्यैव सामान्यकार्यरूपम् ऋजुव्यवहरणं चतुर्थं स्थानकं चतुर्भेदमाह—

वायाए किरियाए, अविसवाओ उवायफलविसए। एय चउव्विहं पि हु, समासओ कित्तइस्सामि ॥१॥

व्याख्या—' वाचो ' वचनस्याऽविसंवादः पूर्वोक्तबाधाऽनवभाषणम्, एवं क्रियाया व्यापारस्याप्यविसंवादो वचनानुसारेण करणम्। अविसंवादपदं मध्यस्थितं डमरुकमणिन्यायेन पूर्वयोर्द्वयोरग्रेतनयोरपि द्वयोर्योज्यं, तेनोपायफलविषये चोपायगोचरः फलगोचरश्चाऽविसंवाद इति तत्र यस्य धर्मादेः पुरुषार्थस्य यत्साधनं दानादि तस्य तत्रैव व्यापारणम् उपायाविसंवादः। तथा फलं वचन–क्रियादिसाध्यभावरूपं, तस्याविसंवादो नान्यथाभावः–फलाविसंवादः; भावानुसारेण वर्तनमित्यर्थः। एवमेतद् ऋजुव्यवहरणम्–अकुटिलव्यापारणमपि न केवलं गुणवत्त्वमित्यपेरर्थः। ' चतुर्विधं ' चतुष्प्रकारं, ' तुः ' पादपूरणे, ' समासतः ' संक्षेपेण ' कीर्तयिष्यामि ' भणिष्यामि। इति गाथार्थः ॥ १ ॥

तत्र प्रथमं तावत् सकलजनस्फुटलक्षणत्वाद् वचनाविसंवादो वक्तव्यः। सोऽप्यनेकविधः, ततः प्राधान्याद्धर्मविषयं तावदादौ तमाह—

**वायाअविसंवाओ, धम्मे सुविणिच्छियं असंदिद्धं। सुपरिप्फुड जहगहियं, वियागरिंतस्स नायव्वो ॥**

व्याख्या—' वचनाविसंवादः ' प्रतीतः, ' धर्मे ' सर्वज्ञोपदिष्टश्रुतधर्मविषये ज्ञातव्य इति योगः। कथम्? इत्याह– ' सुविनिश्चितम् ' अतिशयेन विविधैः प्रकारैर्निर्णीतम्, अत एव ' असंदिग्धं ' निःसंशयं; सुनिश्चितत्वेनैवाऽसंदिग्धत्वे लब्धे तद्ग्रहणं संशयस्य मिथ्यात्वरूपमहानर्थफलत्वख्यापनार्थम्। ' सुपरिस्फुटं ' वर्णतोऽर्थतश्च प्रव्यक्तम्। ' यथागृहीतं ' येन प्रकारेण गुर्वादिमुखादवधारितं जीवादितत्त्वं यत्तत्तथैवेति गम्यते। ' व्याकुर्वाणस्य ' प्रतिपादयतो ' ज्ञातव्यो ' बोद्धव्यः, अन्यथा तु गुर्वादिवचनेन विसंवादः। इति गाथार्थः ॥ २ ॥

अथ व्यवहारविषय तमाह—

**ववहारे वि तह च्चिय, जह गहिय त तहा भणतस्स। जह वा लब्भइ लोए, तहा भणतस्स नायव्वो ॥**

व्याख्या—' व्यवहार' ' क्रय-विक्रयादिरूप', सभादिषु उक्ति-प्रत्युक्तिरूपो वा । तथा च वक्तारो भवन्ति " अत्रार्थे युष्माभि. सहाऽस्माक राजकुले व्यवहार " इति । ततो व्यवहारेऽपि, न केवल धर्मे, इत्यपिशब्दार्थः । धर्मेवद्-त्रापि वचनाविसवादो ज्ञातव्य इति योगः । कथम् ? इत्याह—' यथा गृहीत ' येन प्रकारेण वाणिजकादेः सकाशात् क्रीव यद्वस्त्विति गम्यते, तत्तथैव ' भणतो ' अभिदधत इति । ' यथा वा ' इति वाशब्द. पक्षान्तरसन्सूचनार्थः, तेन यथा वा येन प्रकारेण नियतमूल्यादिना ' लभ्यते ' प्राप्यते मञ्जिष्ठादिद्रव्य ' लोके ' वणिग्वर्गे तथा भणत इति । उप-लक्षण चैतद्, राजसभादिष्वपि नित्यमात्मान व्यवस्थापयितुमारभ्य, सुवर्णलक्ष वा लभ्यमुक्त्वा, [ ग्रन्थाग्र ८९० ] चौर्यं मया न कृतमिति प्रतिज्ञाय तथैव निर्वाहयत इति । अन्यथा तु विपर्ययः, पुरुषान्तरवचनेन व्यभिचारादिति गाथार्थः ॥ ३ ॥

एव सर्वश्राद्धसाधारण वचनाविसवादमभिधाय, अथ वैद्यादेः श्रावकस्य विशेषविषयमपि तमाह—

**विज्जस्स वि वाहिनियाण,-किरियट्ठिइमवितह भणंतस्स। रण्णो वि हु अवराह, जहाफुडं वागरिंतस्स॥**

व्याख्या—' वैद्यस्यापि ' भिषजोऽपि ' व्याधिनिदानक्रियास्थितिं ' रोगस्योत्थानबीज प्रतीकारमर्यादां च ' अवि-

तथा ' सत्यां ' भणतः ' व्याधितप्रभृतीनां पुरतः प्रतिपादयतः, अन्यथा तु वैद्यान्तरवचनेन विसंवाद इति भावः, तथा ' राज्ञोऽपि ' नृपस्यापि भृत्यादिसंबन्धिनमपराधम्–दूषणं ' यथास्फुटं ' येन प्रकारेण व्यक्ततया चौरादेः सकाशात्प्रतीतं तथैव ' व्याकुर्वाणस्य ' अभिदधत इति । अत्र च भणत इत्यनुवृत्तावपि व्याकुर्वाणस्येत्यभिधानं न दुष्टम्, भिन्नवाक्यत्वाद्, एवं पूर्वगाथायामपि, लोभ–द्वेषादिना त्वन्यथा प्रकाशने चरादिवचनविसंवाद इति । वचनविसंवादाविसंवादयोश्च दोष–गुणा लोकप्रकटा एव । तथा चोक्तम्—" अनृतवचनवादी चेत्प्रतीतः पुरा, असौ तदनु यदि सत्यं दैवयोगाद् ब्रवीति तदनृतमिति लोके प्रत्ययः, लाघवं स्याद्, भवति पुनरवज्ञा, तद्गतो जीवितं किम् ? । तथा–संपद्येरन्नचलवचसां कीर्ति–धर्मा–ऽर्थ–कामाः, कामं लोका विहितमहितात्मीयभावाः समस्ताः । त्यक्त्वा शङ्कां धनमिव निजं गुह्यमावेदयन्ति, सर्वे यद्वा गुरुगुणगणाः सत्यभाजो भवन्ति ॥ १ ॥ इति गाथार्थः ॥ ४ ॥

वचनाविसंवादफलत्वात् क्रियाऽविसंवादस्य, इति तदनन्तरं तमेव धर्मविषयं तावदाह—

**किरियाअविसंवाओ, धम्मे जह पन्नवेइ तह कुणइ । गिहिणो किरियं इयरं, जईसु संदंसणाहिंतो ॥५॥**

व्याख्या—' क्रियाऽविसंवादः ' प्रागुक्तशब्दार्थः, स च ' धर्मे ' धर्मविषये, कथम् ? इत्याह—' यथा प्रज्ञापयति ' द्वि–त्रादिश्राद्धमध्ये प्ररूपयति श्रावकः सुगुरूपदेशानुसारेण ' तथैव ' प्ररूपणानुसारेण ' करोति ' विधत्ते । ' गृहिणः ' श्रावकस्य ' क्रियां ' सामाचारीं–देवपूजादिद्रव्यस्तवरूपाम्, ' इतराम् ' अन्यां ' संदंसणाहिंतो ' त्ति—सदर्शनात् सम्य-

ऋत्वातसकाशात्, 'यतिंतु' इति यतीनां सम्बन्धिन्या इत्यर्थः। सम्यक्त्व हि यतीनां श्रावकाणां च यावज्जीव त्रिविधं त्रिविधेन मिथ्यात्वपरिहारेणैव शुद्धं भवति, शेषा च क्रिया भावस्तवरूपा साधूनां, श्राद्धानां तु द्रव्यस्तवरूपा। ततश्चासौ श्रावको यतीनां सम्यक्त्वमेकं विहाय शेषां यतिक्रियाया अन्यां प्ररूपयति करोति चेति करणाविसंवादः, अन्यथा तु प्ररूपणा-क्रिययोर्विसंवाद इति गाथार्थः ॥ ५ ॥

अथ तमेव व्यवहारविषयं दर्शयन्नुपायाविसंवादमपि शेषपुरुषार्थसाधकतमत्वेन प्राधान्याद्धर्मस्य तद्विषय तावत् प्रस्तौति—

ववहारे पुण ऊणं, न देइ पडिरूवगं नवा कुणइ। जाणइ उवायमूलं, धम्मस्स य त तहायरइ ॥ ६ ॥

व्याख्या—धर्मे तावदुक्तः करणाविसंवादो, 'व्यवहारे' क्रय-विक्रयादिरूपे 'पुनरूनं' प्रस्तुतमूल्यलभ्यादतिहीनं वस्तु 'न ददाति' नैव ग्राहकस्य प्रयच्छतीति। 'प्रतिरूपः' सदृशो व्रीह्यादेरिव पलिञ्जादिः, स एव प्रतिरूपकः, तेन व्यवहारोऽप्युपचारात् प्रतिरूपकः, त 'न करोति' न विधत्ते यदि तदा क्रियाऽविसंवाद इत्यर्थः। तथा 'जानाति' बुध्यते 'उपायाः' साधनानि तेषामपि 'मूलम्' आद्य—वक्ष्यमाणदानादिकं 'धर्मस्य' पुण्यस्य, चशब्दः पूर्वाऽविसंवादसमुच्चयार्थः। ज्ञात्वा च तदुपायमूलं 'तथैव' ज्ञातानुसारेण 'आचरति' व्यापारयति; धर्मादावुपेये दानादिकमेवोपायं व्यापारयन्नुपायाऽविसंवादीति गाथार्थः ॥ ६ ॥

